INDIAN RESEARCH INSTITUTE PUBLICATIONS.

*VEDIC SERIES*

# ṚGVEDA-SAṂHITĀ

## PART IV

GENERAL EDITOR
MAHAMAHOPADHYAYA PANDIT SITARAM SHASTRI




JANUARY–MARCH 1934

*Published by*

SATIS CHANDRA SEAL, M. A., B. L.,
*Hony. Secretary,*

INDIAN RESEARCH INSTITUTE
55, UPPER CHITPORE ROAD
CALCUTTA.

Inland Price Rs. 1/0 ] [ Foreign Price 2s. 6d.

## THE INDIAN RESEARCH INSTITUTE

*ITS OBJECTS (in brief)*

1. To publish the best products of Ancient Indian Literature in critical and moderately priced editions with translations and critical and explanatory notes in English, Hindi and Bengali or other Vernaculars

2. The following Series of Literature may be published simultaneously
   - (i) Vedic series (consisting of the Samhitas, Brahmanas, Aranyakas, Upanishads etc of the four Vedas )
   - (ii) Philosophical series (consisting of the best products of all the systems )
   - (iii) Smriti series (including Puranas, Dharmashastras, etc )
   - (iv) Buddhistic series (the Buddhistic Philosophy and Literature)
   - (v) Jaina series (the Jaina Philosophy and Literature).
   - (vi) Ayurveda series.
   - (vii) Indian Positive Sciences series (consisting of Indian Chemistry, Physics, Astronomy etc )
   - (viii) Sociological series (consisting of Indian Law, History, Economics etc.)
   - (ix) Fine Arts series (consisting of Indian Painting, Architecture, Music, etc.)
   - (x) Miscellaneous (Exegetic works etc.)

3. To publish Research journals in English, Hindi and Bengali

4. To offer facilities to scholars to make researches in Ancient Indian Literature.

5. To take all necessary steps to spread Ancient Indian Culture and Wisdom.

6. To organise educational institutions on the lines of ancient Rishikula.

युञ्जन्ति” इत्येवमनुक्रान्तत्वात्। ऋषिच्छन्दोदेवताविनियोगाः पूर्ववत्[२]। विशेष-

तदेतच्छाट्यायनके विस्पष्टं प्रतिपादितम्। यथा दृष्टमिदं सूक्तं तत्तत्रैवावधार्यताम् ॥ १२ ॥
ऋष्यादिभेदः प्रायेण सूक्तभेदस्य कारणम्। कारणान्तरमप्यस्ति दृश्यते यत्क्वचित्क्वचित् ॥ १३ ॥
अर्थानुरोधादपि च सूक्तानां भेद इष्यते। ऋषिच्छन्दोदैवतेषु समानेष्वपि च क्वचित् ॥ १४ ॥
तत्रोदाहरणान्याहुर्नवमे मण्डले बुधाः। एकार्षकाणि सूक्तानि मन्द्रया सोम धारया ॥ १५ ॥
सुरूपकृत्नुमूतय इति सूक्तेषु सप्तसु। देवतेन्द्र ऋषिश्चैको भिद्यते केन हेतुना ॥ १६ ॥
छन्दश्च षण्णां गायत्री सप्तमेऽनुष्टुबागता। गायन्ति त्वा गायत्रिणः काम तत्तेन भिद्यताम् ॥ १७ ॥
नोपपादयितुं शक्य मनुष्यैरत्र कारणम्। तथापि कारणं किञ्चित्कथ्यमानमिदं शृणु ॥ १८ ॥
सुरूपकृत्नुसूक्तेन यज्ञ आगन्तुमिच्छति। आगते सति कर्तव्यमात्वेति च भाषते ॥ १९ ॥
युञ्जन्ति ब्रध्नमित्यस्मिन्यथा वै सहकारिभिः। यस्मिंश्च काल आयाति तत्सर्वं कथितं विदुः ॥ २० ॥
इन्द्रमिद्गाथिनो बृहदिति सूक्तेन भाषते। अनेकाह्वातृसद्भावमिन्द्रमाहात्म्यमेव च ॥ २१ ॥
बहवो यद्यपीन्द्र त्वां विह्वयन्त इमे जनाः। तान्सर्वानपहाय त्वमस्माकं भव केवलः ॥ २२ ॥
एन्द्रसानसिमित्यत्र स्तुतादिन्द्राद्धनोप्सति। धनमात्माभिलषितं सञ्जिर्हापति च स्तुतिम् ॥ २३ ॥
स्तुतमिन्द्रं जिगमिषुमृषिस्त्यक्तुमशक्नुवन्। इन्द्रेहीति पुनः स्तौति याचते च धनं पुनः ॥ २४ ॥
उक्तमर्थमिमं सर्वं सप्तकेनानुभाषते। आनुष्टुभेन सूक्तेन गायन्तिन्त्वेत्यृषिः पुनः ॥ २५ ॥
कवित्वस्यानुरोधाय तमेवार्थं पुनः क्वचित्। अन्यं प्रकारमाश्रित्य पश्यन्ति च महर्षयः ॥ २६ ॥
भेदस्तत्रापि सूक्तानां भवतीति विनिश्चयः। नासत्याभ्यां बर्हिरिव सूक्तमाहुर्निदर्शनम् ॥ २७ ॥
स्तौत्यश्विनावृषिस्तेषु सङ्गृह्य च विगृह्य च। कक्षीवान् दैर्घतमसः कवित्वं सम्प्रदर्शयन् ॥ २८ ॥
पश्यन्ति तांस्तानुद्दिश्य कामानिह महर्षयः। ये ये सूक्तेषु दृश्यन्ते ते च भेदस्य हेतवः ॥ २९ ॥
तथा दर्शनकालस्य भेदश्चैषां विभेदकः। स च भेदो ब्राह्मणेषु मन्त्रेष्वपि च दृश्यते ॥ ३० ॥
महावाक्यानुरोधेन सैषा सूक्ष्मेक्षिका बुधैः। कार्या भिन्नेषु सूक्तेषु शुद्धमर्थमभीप्सुभिः ॥ ३१ ॥ इति।

(२) ऋषिच्छन्दोदेवताविनियोगाः पूर्ववदिति। यथा पूर्वस्य सूक्तस्य ऋषिर्मधुच्छन्दा अनुवृत्तेः, छन्दो गायत्रम् अनुवृत्तेः, “आदौ गायत्रं प्राग्घिरण्यस्तूपाद्” इति अनुक्रमणिकाकारेण विशेषपरिभाषणाच्च, देवता इन्द्रः अनुवृत्तेः, इन्द्रलिङ्गाच्च, विनियोगश्चाभिप्लवषडहे प्रातःसवने स्तोमवृद्धौ ब्राह्मणाच्छंसिन आवापार्थत्वेन, महाव्रते निष्केवल्ये औष्णिहतृचाशीतिगतत्वेन, एवमस्यापि सूक्तस्य ऋष्यादिकं तथैवेत्यर्थः। अत्रर्ष्यादिषु सामान्येन पूर्ववदित्यतिदेशेऽपि विनियोगविषये सूक्तीयो यावान्विनियोगस्तावानेवातिदेष्टव्यो न तृचादिविनियोगस्तेन सुरूपेत्यादेस्तृचस्य चतुर्विंशाहर्गतो विनियोगः, सुरूपेति ऋचश्चाग्निष्टोमगतो धाय्यात्वेन विनियोगश्चात्र नातिदिश्येते। ‘सामान्यातिदेशो विशेषानतिदेश’ इति न्यायात्। अन्यथा तयोरपि पूर्वसूक्तव्याख्याप्रारम्भे प्रदर्शनेन पूर्वशब्देन ग्रहणादतिदेशः स्यात्। अयं च लौकिको न्यायः। अतएव लोके कस्यांचन स्त्रियां मातृवद्भावातिदेशके लौकिके वाक्ये ‘अस्यां मातृवद्वर्तितव्यम्” इत्यत्र मातृमात्रस्य धर्मः पूज्यत्वादिरेवातिदिश्यते न तु विशेषधर्मः पितृपत्नीत्वादिस्तद्वत्। यद्यपि महाव्रते औष्णिहतृचाशीतौ उष्णिक्छन्दस्कानामेव मन्त्राणां पाठः, इदं पूर्वतनमपि च सूक्तं गायत्रीछन्दस्कमिति तत्र विनियोगानानुगुण्यमेतयोस्तथापि उष्णिक्छन्दस्कतृचाशीतेरुपलक्षणतयौष्णिहत्वं संपत्त्या वा तादृशत्वमित्यदोषः। किञ्चै-

विनियोगस्तु अतिरात्रे तृतीये पर्याये मैत्रावरुणशस्त्रे स्तोत्रियोऽयं तृचः[3]। "अतिरात्रे पर्यायाणामि"ति खण्ड "आ त्वेता निषीदत" (आ० ६।४) इत्युक्तत्वात्।

---

तत्सूक्तस्यौष्णिहच्छन्दस्केषु सूक्तेषु शंसनार्हता यतोऽत्र बहुलानां मन्त्राणां संपत्तिं विना गायत्रत्वस्यासिद्धिः, यथा प्रथमे मन्त्रे प्रथमः पादः सप्ताक्षरः, व्यूहेनैवाष्टाक्षरत्वं नेयः, द्वितीये आद्य पादः सप्ताक्षरो द्वितीयः षडक्षरः, तत्र संपत्त्यापि नाष्टाक्षरत्वयोग्यता आद्ये पादे व्यूहनस्यानवकाशात्, द्वितीये पादे वार्येत्यत्र व्यूहनेऽप्येकाक्षरविवृद्ध्याऽष्टाक्षरत्वासंपत्तेः। तृतीये मन्त्रे द्वितीये पादेऽपि एषैव गतिः। पञ्चमे मन्त्रे तृतीयः पादः सप्ताक्षरः, संपत्त्याऽष्टाक्षरतां नेयः, एवं षष्ठसप्तममन्त्रगतयोराद्यपादयोरप्येषैव गतिः, अष्टमेऽपि आद्य पादद्वयं पूर्ववत्सप्ताक्षरं संपत्त्या गायत्रच्छन्दोयोग्यम्, एवं नवमे तृतीयः पादस्तादृशः। एवं च संपूर्णे सूक्ते केवलं मन्त्रद्वयमेव संपत्तिं विना गायत्रच्छन्दोयुतम्, अवशिष्टं मन्त्रजातं गायत्रत्वार्थं सम्पत्तिमाकाङ्क्षति इति संपत्त्या गायत्रत्वमसंपत्त्यौष्णिहत्वमप्यर्हतीति औष्णिहेषु विनियोगस्य न सर्वथाऽनानुरूप्यम् इति दिक्।

(३) अतिरात्रे तृतीये पर्यायेति। सोमयागस्य सप्त संस्था भवन्तीति प्रागुक्तम्। तत्रातिरात्रनामकः सोमस्य संस्थाविशेषः। तत्र षोडशिपर्यन्तमनुष्ठाय तत ऊर्ध्वं त्रयः पर्याया रात्रावनुष्ठीयन्ते। तद्वशतोऽस्यातिरात्रमिति नाम। अयं भावः: अग्निष्टोमे स्तोत्राणि शस्त्राणि च द्वादश द्वादश तत ऊर्ध्वमत्यग्निष्टोमे एकैकं स्तोत्रं शस्त्रं च अधिकम्, तत उक्थ्ये स्तोत्रद्वयं शस्त्रद्वयं चेति मिलित्वा स्तोत्राणि पञ्चदश भवन्ति शस्त्राण्यपि तावन्त्येव। एतदन्तं सर्वं दिनेऽनुष्ठाय सन्धिकाले षोडशिस्तोत्रं शस्त्रं च वक्तव्ये। तस्य चास्य शस्त्रस्य च स्तोत्रस्य च पूर्वापेक्षया षोडशत्वमिति अस्य नाम षोडशीति। तत ऊर्ध्वं रात्रिपर्यायत्रयानुष्ठानम्। तेषु च पर्यायेषु होता होत्रकाश्च मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकरूपास्त्रयो मिलित्वा चत्वारः शस्त्राणि शंसन्ति। तत्र होतुश्चमसस्य मुख्यत्वे होत्रकचमसत्रयस्यामुख्यत्वे एको गणो भवति, मैत्रावरुणचमसस्य मुख्यत्वे तदितरेषां चमसानाममुख्यत्वे द्वितीयो गणो ब्राह्मणाच्छंसिनश्चमसस्य मुख्यत्वेऽपरेषां च पूर्ववदमुख्यत्वे तृतीयो गणः, अच्छावाकचमसस्य मुख्यत्वे च चतुर्थो गणः। तत्र प्रथमगणद्वयेऽध्वर्युः प्रचरति उत्तरगणद्वये च प्रतिप्रस्थाता, एवं गणचतुष्टयानुष्ठानं प्रथमः पर्यायः। एवमेव द्वितीयः पर्यायः, एवमेव च तृतीयः पर्यायः। तदुक्तमापस्तम्बेन - "अतिरात्रमेव षोडशिनमसंभृत्य तत्र त्रयोदशभ्यश्चमसगणेभ्यो राजानमभिरेचयति। षोडशिना प्रचर्य रात्रिपर्यायैः प्रचरति होतृचमसमुख्यः प्रथमो गणो भवति मैत्रावरुणचमसमुख्यो द्वितीयो ब्राह्मणाच्छंसिचमसमुख्यस्तृतीयोऽच्छावाकचमसमुख्यश्चतुर्थः। प्रथमाभ्यां गणाभ्यामध्वर्युश्चरत्युत्तराभ्यां प्रतिप्रस्थातैष प्रथमः पर्याय एवं विहितो द्वितीयस्तृतीयश्चेति"। तत्र प्रथमे पर्याये स्तोत्रियानुरूपेषु तृचेषु प्रत्यृचं प्रथमः पादो द्विरभ्यस्यावस्यन्ति अवशिष्टाश्च ऋचः सन्धायान्ते प्रणवमुच्चारयन्ति सर्वे, मध्यमे पर्याये मध्यमस्य पादस्य द्विरभ्यासपूर्वमवसानमृगन्तेश्च प्रणववचनम्, तृतीये पर्याये उत्तमपादानां द्विरभ्यासः। अच्छावाकेन तु चतुरक्षराण्येवाभ्यस्यन्ते। तत्रैतेषु पर्यायेषु प्रतिपर्यायं शस्त्रचतुष्टयं होतुरेकं होत्रकाणां च त्रयम्। तत्र प्रथमे पर्याये होतुः "पान्तमा वो अन्धस" इति स्तोत्रियस्तृचः, "अपादु शिप्र्यन्धस" इति अनुरूपस्तृचः, "त्यमु वः सत्रासाहमि"तिमन्त्रतः सूक्तशेषपर्यन्ता ऋचः, "अभि त्यं मेषमि"ति सूक्तं पर्यासरूपम्, "अध्वर्यवो भरतेन्द्राय सोममि"ति याज्या, मैत्रावरुणस्य — "प्र व इन्द्राय मादनमि"ति स्तोत्रियस्तृचः, "प्रकृतान्यृजीषिण" इत्यनुरूपः तृचः, "प्रतिश्रुताय वो धृषदि"ति पञ्चदश ऋचः, "दिवश्चिदस्ये"ति पर्यासः, "स नो नव्येभिरि"ति च पर्यासः

तत्र प्रथमामृचमाह : –

आ त्वेता नि षीदतेन्द्रमभि प्र गायत ॥

सखायः स्तोमवाहसः ॥ १ ॥

आ । तु । आ । इत । नि । सीदत । इन्द्रम् । अभि । प्र । गायत ॥

सखायः । स्तोमऽवाहसः ॥ १ ॥

अस्य मदे पुरु वर्पांसि विद्वानि''ति याज्या, ब्राह्मणाच्छंसिनः—"वयमु त्वा तदिदर्था" इति स्तोत्रियस्तृच, "वयमिन्द्र त्वायवोऽभि" इति अनुरूपस्तृच, "वार्त्रहत्याय शवसे" इति सूक्तमन्तिमऋग्वर्जम्, "इन्द्रो अङ्ग महद्भयमभी' ति तृच, "त्यमु वाचमि' ति पर्यास., "अप्सु धूतस्य हरिवः पिबेहे''ति याज्या, अच्छावाकस्य 'इन्द्राय मद्वने सुतमि''ति स्तोत्रियस्तृच, "इन्द्रमिद्गाथिनो बृहदि''त्यनुरूपस्तृच, "एन्द्र सानसि रयिमि' ति सूक्तम्, "एतो न्विन्द्र स्तवामेशानमि''ति तृच, "मा वो अस्मिन्मघवन्नि' ति पर्यास., "इन्द्र पिब तुभ्य सुतो मदाये''ति याज्या। द्वितीये पर्याये "अयन्त इन्द्र सोम" इति तृच स्तोत्रियो होतु, "अय ते मानुषे जने" इत्यनुरूपस्तृचस्तस्यैव "उद्घेदभी' ति सूक्तमन्तिमऋग्वर्जम्. "अहं भुवमि' ति पर्यास, अपाय्यस्यान्धसो मदाये' ति याज्या, मैत्रावरुणस्य 'आतून इन्द्र क्षुमन्तमि''ति स्तोत्रियस्तृच "आ प्र द्रव परावत' इत्यनुरूपस्तृच, "तह्यस्य वज्रमरमि''त्यष्टावृच, "ईङ्खयन्तीरपस्युव" इति सूक्तम्, "अह दा गृणते इति सूक्तम्, पाता सुतमिन्द्रो अस्तु सोममि''ति पर्यास, "हन्ता वृत्रमिन्द्र" इति याज्या ब्राह्मणाच्छंसिनः "अभि त्वा वृषभासुत" इति स्तोत्रिय, अभि प्र गोपति गिरे''ति अनुरूप, 'आतून इन्द्र मद्र्यगुवान" इति सूक्तद्वय 'अश्वावति प्रथमो गोषु गच्छति" इति सूक्तं "प्रोग्रां पीतिमि' ति पर्यासः। "वृष्ण इयर्मि सत्यामि''ति याज्या, अच्छावाकस्य "इद वसो सुतमन्ध" इति स्तोत्रिय, "इन्द्रेहि मत्स्यन्धस" इति अनुरूपः,"प्रसम्राजं चर्षणीनाम्' इति सूक्तम्, "उपक्रमस्वाभर धृषते''ति तृच, 'तदस्मै नव्यमङ्गिर" इति सूक्त पर्यास., "अस्य पिब यस्य जज्ञान इन्द्रे" ति याज्या, तृतीये पर्याये होतुः "इद ह्यन्वोजसे''ति स्तोत्रियस्तृच, "महा इन्द्रो य ओजसे''त्यनुरूप., "समस्य मन्यवे विश" इति द्विचत्वारिंशदृच "विश्वजिते धनजित" इति सूक्त पर्यासः, "तिष्ठाहरी रथमायुज्यमाने''ति याज्या, मैत्रावरुणस्य "आत्वेतानिषीदते''ति स्तोत्रियस्तृचः "आत्वशत्रवागही' ति अनुरूपस्तृच., "नकिरिन्द्र त्वदुत्तर" इति सूक्तमुत्तमवर्जम्, "श्रत्ते दधामी' ति सूक्त पर्यासः, "इदं त्यत्पात्रमिन्द्रपानमि' ति याज्या, ब्राह्मणाच्छंसिनः "योगेयोगे तवस्तरमि''ति स्तोत्रियः, "युञ्जन्ति ब्रध्नमरुषमि''ति अनुरूप., "यदिन्द्राहम्'. "वने महे" इति सूक्ते, 'ऊर्ता शचीवस्तवर्वीर्येणे''ति याज्या, अच्छावाकस्य "इन्द्रः सुतेषु सोमेषु" इति स्तोत्रियः, "य इन्द्र सोमपातम इत्यनुरूप., "आ घा ये अग्निमिन्धत" इति सप्तदशर्चः 'य इन्द्र चमसेष्वा सोम" इति तृच, "प्र व. सताम्''ति सूक्त पर्यासः, "प्रो द्रोणे हरयः कर्माग्मन्नि''ति याज्येति शस्त्राणि भवन्ति। तत्र तृतीये पर्याये मैत्रावरुणस्य शस्त्रे स्तोत्रियत्वेन आत्वेतेति तृचस्य विनियोग इत्यर्थः।

तु शब्दः क्षिप्रार्थो निपातः । आभ्यामाङ्भ्यामन्वेतुमितशब्दोऽभ्यसनीयः[४] । हे सखायः = ऋत्विजः, तु क्षिप्रमस्मिन्कर्मण्येतेत आगच्छतागच्छत । आदरार्थोऽभ्यासः । आगत्य च निषीदत = उपविशत । उपविश्य इन्द्रमभिप्रगायत सर्वतः प्रकर्षेण स्तुत । कीदृशाः सखायः ? स्तोमवाहसः । त्रिवृत्पञ्चदशादिस्तोमानस्मिन्कर्मणि वहन्ति प्रापयन्ति । ते स्तोमवाहसः[५] ॥१॥

(४) इतशब्दोऽभ्यसनीय इति । अयं भावः अत्र मन्त्रे प्रयुज्यमानमाकारद्वयमुपसर्गरूपम् । उपसर्गाश्च क्रिययैव सम्बध्यन्त इति ताभ्यां सम्बन्धनाय क्रियापदमपेक्षणीयम् । तच्च सति सम्भवे योग्यत्वे च प्रकृतवाक्योपात्तमेव ग्रहणार्हम् । सन्निकर्षात् । तादृशं चात्र क्रियापदमितेत्येतदेव सकृदुक्तम् । सकृदुक्तस्य तस्य सकृदेवान्वयः स्यात् शब्दानां विरम्य व्यापाराभावात् । तथा च तत्सम्बध्यमानमेकमेवाङा सम्बद्धं स्यात् न तु द्वयेन युगपत् । एकेनान्वीयापरेणा वाक्यवचनावसरे पर्यालोचनेन निराकाङ्क्षस्य तस्य नान्वयः स्यादिति द्वितीयमाङ्पदमनन्वितं स्यात्, तदा तदन्वये योग्यस्य क्रियापदस्याध्याहारः कर्तव्यः । तत्र स्वतन्त्रस्याध्याहारे गौरवाल्लाघवेन सन्निधिवाक्योक्तस्याभ्यासेनैव सम्बन्धकरणमुचितमिति इतशब्दस्यैव तादृशस्याभ्यासेनापरेणाङा सम्बन्ध इति । अतएव मीमांसायां स ते वात प्राणेन गच्छतां, समङ्गानि यजत्रैः, सं यज्ञपतिराशिषेति वाक्यस्थले तृतीये वाक्ये सम उपसर्गस्य वचनाद्योग्यक्रियाध्याहारपक्षं पूर्वपक्षीकृत्य प्रथमवाक्योक्तगच्छतामितिपदस्याभ्यासेनानुषङ्ग इति सिद्धान्तितमिति ।

(५) सामवेदिभिर्यज्ञे सामगानावसरे गीयमानस्य साम्न आधारत्वेन ऋक्त्रयं गृह्यतेऽर्थात्तत्र्य सामसप्तत्यादिकमृक्त्रये संयोज्य गीयते । साम च गीतिस्वरूपं तच्चाश्रयमन्तरा न व्यक्ततामापद्यत इति आश्रयत्वेन ऋचो ग्रहीतव्या भवन्ति । तेषां च साम्नां प्रकाराः सामवेदे एकैकामृचमादाय तत्र सकलावयवप्रदर्शनगर्भं प्रदर्श्यन्ते । ते च प्रकारा यासु ऋक्षु प्रदर्श्यन्ते ताः साम्नां योनिभूता ऋच इत्युच्यन्ते । गानसहितास्ता ऋचो यस्मिन्सामवेदभागे उच्यन्ते तस्य भागस्य योनिग्रन्थ इति सामवेदिनां समाख्या । योनीनां सामप्रदर्शनमूलभूतानामृचां ग्रन्थ इति तत्पदविग्रहात् । साम्नश्चावयवाः पञ्च सप्त वा भवन्ति ते भक्तिशब्देनोच्यन्ते । ते च हिंकारः, प्रस्तावः, उद्गीथः, प्रतिहारः, निधनमिति पञ्च, हिंकारः, प्रस्तावः, आदिः, उद्गीथः, प्रतिहारः, उपद्रवः, निधनमिति सप्त इति, पञ्च वा सप्त वा भागा भक्त्योऽवयवा भवन्ति । तासां योनिभूतानामृचां पाठवशतो योनिग्रन्थ इति समाख्या याज्ञिकानामिति उक्तमेव । यज्ञे यदा साम गेयं तदा तदृक्त्रये गेयं भवति । तत्र योनिग्रन्थगता गीयमानसाम्नः प्रदर्शनाधारभूता ऋगेका, ऋग्द्वयं च परत्रापेक्षणीयं सामवेदे यस्मिन्भागे उच्यते स ग्रन्थ उत्तराग्रन्थ इति व्यवह्रियते । एवं च योनिग्रन्थगतैका ऋक् उत्तराग्रन्थगतं चर्ग्द्वयमिति मिलित्वा ऋक्त्रयं सम्पाद्य तत्र साम गातव्यं भवति । अतएव ब्राह्मणे उच्यते एकं साम तृचे क्रियते स्तोत्रियमिति । तस्य च तृचस्य आवृत्त्या ऋचां संख्या वर्द्धनीया भवति या स्तोमशब्देनोच्यते । सा चापेक्षिता स्तोमापरपर्याया ऋचां संख्या अवयवशस्त्रिरावृत्ततृचे प्रत्यावृत्त्येकैकावयव-

ऋचीति तृगन्त इति पाठः पुस्तकान्तरे ।

एतेनेति पुस्तकान्तरे नास्ति ।

आ। तु। आ*। निपातत्वादाद्युदात्ताः इत। इण् गतौ। "द्व्यचोऽतस्तिङः" (पा० ६।३।१३५) इति संहितायां दीर्घत्वम्। नि। निपातत्वादाद्युदात्तः। सीदत।

संपादनगर्भं प्रदर्श्यते। तृचस्य समुदितस्यावृत्तिश्च पर्यायशब्देनोच्यते याज्ञिकैः। एवं च सा अपेक्षिता सङ्ख्या त्रिभिः पर्यायैः प्रदर्शनीयेति फलति। ते च संपादनीयाः स्तोमास्त्रिवृदादयोऽष्टाचत्वारिंशत्परमा भवन्ति। त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, त्रिणवः, त्रयस्त्रिंशः, चतुर्विंशः, चतुश्चत्वारिंशः, अष्टाचत्वारिंश इति। तत्राद्याः षट् पृष्ठ्यषडहे क्रमेणोपयुज्यन्ते, अन्तिमास्त्रयश्छन्दोमनामकेषु त्रिष्वहःसु उपयुज्यन्ते। तत्र त्रिवृतः स्तोमस्य विष्टुतित्रयं भवति। विष्टुतिर्नाम त्रिवृतः स्तोमस्य समुदितस्य संपादनरीतिः। साच त्रिविधा भवति उद्यती, परिवर्तिनी, कुलायिनीतिनामभिः। तत्र प्रथमा त्रिरावर्तनीयतृचस्याद्यर्चस्त्रिरावर्तनेन प्रथमः पर्यायः, द्वितीयस्यास्त्रिरावर्तनेन द्वितीयः पर्यायः, अन्त्यायास्त्रिरावर्तनेन तृतीयः पर्याय इति रूपेण संपद्यते। द्वितीया आवर्तनीयतृचस्यानावृत्तरूपेण सकृत्पाठः प्रथमः पर्यायः, तथैव पुनःपाठे द्वितीयः, तथैव पुनःपाठे तृतीयः पर्याय इति पर्यायत्रयेण भवति। तृतीया विष्टुतिः त्रिरावर्तनीयतृचस्य सकृत्पाठः प्रथमः पर्यायः, तृचगतानामृचां मध्ये द्वितीयतृतीयप्रथमा इत्येवं क्रमेण ऋचां ग्रहणेन संपद्यते स द्वितीयः पर्यायः, तासामेव तृचगतानामृचां तृतीयप्रथमद्वितीया इत्येव क्रमेण ग्रहणेन संपद्यते स तृतीयः पर्याय इत्येवरूपा भवति॥ पञ्चदशस्तोमस्य विष्टुतित्रयम् पञ्चपञ्चिनीएका, उद्यतीद्वयमिति। तत्र प्रथमा विष्टुतिरेवम्—आवर्तनीयतृचस्य प्रथमावृत्तौ प्रथमाया ऋचस्त्रिरावृत्तिः द्वितीयतृतीययोः सकृत्पाठ इति प्रथमः पर्यायः, तासामेव तृचगतानामृचां मध्ये प्रथमा सकृद् द्वितीया त्रिवारम् तृतीया पुनः सकृदिति द्वितीयः पर्यायः, तासामेव ऋचां मध्ये प्रथमाद्वितीये सकृत् तृतीया त्रिरभ्यस्यते चेत्तृतीयः पर्याय इति संपद्यते॥ द्वितीया विष्टुतिः तत्र प्रथमपर्याये पञ्चसङ्ख्यासंपत्तिः प्रथमायास्त्रिरावृत्तिर्द्वितीयायास्तृतीयायाश्च सकृत्पाठः, द्वितीये पर्याये क्रमेण तृचगतानामृचां पाठ इति त्रित्वसङ्ख्यासंपत्तिः, तृतीये पर्याये सप्तसङ्ख्यासंपत्तिः प्रथमायाः सकृत्पाठो द्वितीयतृतीययोस्त्रिस्त्रिरावृत्तिरिति एवं क्रमेण संपद्यते। तृतीया विष्टुतिश्चास्य स्तोमस्यैवम् प्रथमपर्याये तृचगतानामृचां क्रमेण सकृत्पाठः, द्वितीये पर्याये पञ्चसङ्ख्यासंपत्तिः—प्रथमा सकृत् द्वितीयायास्त्रिरावृत्त्या तृतीया सकृदिति पाठेन संपद्यते, तृतीये पर्याये सप्तसङ्ख्यासम्पत्तिः प्रथमा त्रिः द्वितीया सकृत् तृतीया च त्रिरितिपाठेन इति पर्यायैर्भवति॥ सप्तदशस्तोमस्य सप्त विष्टुतयः—दशसप्तानामिका द्विप्रकारा, सप्तास्थितानामिका द्विप्रकारा, नामरहितका, उद्यती, भस्त्राचेति भेदैः। तत्र दशसप्ताख्या प्रथमा यथा, आवर्तनीयतृचस्य प्रथमे पर्याये पञ्चसङ्ख्यासंपादनम् प्रथमायास्त्रिः पाठो द्वितीयातृतीययोः सकृत्सकृत्पाठः। द्वितीयपर्यायेऽपि पञ्चसङ्ख्यासंपादनमेव। तत्र प्रथमायाः सकृत्पाठः, द्वितीयस्यास्त्रिरावृत्तिः, तृतीयायाः सकृत्पाठ इति, तृतीये पर्याये सप्तसङ्ख्यासंपादनम् तत्र प्रथमा सकृत्, द्वितीयातृतीययोस्त्रिस्त्रिरावृत्तिरिति प्रथमपर्यायगताः पञ्च द्वितीयपर्यायगताः पञ्च तृतीयपर्यायगताः सप्तेति मिलित्वा सप्तदशसङ्ख्यासम्पत्तेरेषा दशसप्ताख्या प्रथमाऽस्य स्तोमस्य विष्टुतिः। एतस्या अपरः प्रकार एवम्—अत्र प्रथमपर्याये पञ्चसङ्ख्यासंपत्तिः प्रथमावत् प्रथमाया ऋचस्तृचगतायास्त्रिः पाठो द्वितीयातृतीययोर्ऋचोश्च सकृत्सकृत्पाठ इति, द्वितीयेऽपि पञ्चसङ्ख्यासम्पादनं प्रथमभेदवदेव—प्रथमा तृचगता सकृत् द्वितीया त्रिः तृतीया सकृदितिपाठेन, तृतीये पर्याये सप्तसङ्ख्यासंपादनमेवम्—प्रथमाया

* तु आ इति पुस्तकान्तरे नास्ति।

"पाघ्राध्मास्थाम्नादाण्दृशि" इत्यादिना (पा० ७।३।७८) सदेः सीदादेशः। "सदेरप्रतेः" (पा० ८।३।६६) इति संहितायां षत्वम्। अभि। "उपसर्गाश्चाभिवर्जमिति" वचनात्

त्रिरावृत्तिः, द्वितीया सकृत्, तृतीयस्यास्त्रिरावृत्तिरिति। एवं रूपेण द्विःप्रकारा दशसप्ताख्या विष्टुतिः सप्तदशस्तोमस्य॥ सप्तास्थिताप्येवं द्विःप्रकारा। तत्र प्रथमप्रकारो यथा प्रथमे पर्याये सप्तसङ्ख्या संपत्तिः प्रथमाया द्वितीयायाश्च त्रिरावृत्तिः, तृतीयस्याश्च सकृत्पाठ इति। द्वितीये पर्याये त्रित्वसङ्ख्या। अत्र क्रमेण तृचगता ऋचः पठनीयाः। तृतीये पर्याये सप्तसङ्ख्या संपत्तिः अत्र प्रथमाया सकृत्पाठः, द्वितीयस्यास्तृतीयस्याश्च त्रिस्त्रिरावृत्तिरिति पर्यायत्रयगतानां क्रमेण सप्तत्रिसप्तरूपसङ्ख्यानां मेलनेन सप्तदशसङ्ख्याया सम्पादनेनैषा सप्तास्थिताख्या सप्तदशस्तोमस्य विष्टुतिः। द्वितीया सप्तास्थिता यथा प्रथमपर्याये सप्तसङ्ख्या तृचगतप्रथमायाऋचस्त्रिरावृत्तिः, द्वितीयायाः सकृत्पाठः, तृतीयस्यास्त्रिरावृत्तिरिति प्रथमः पर्यायः, द्वितीये तृचगतानां तिसृणामृचां क्रमेण सकृद्वचनमिति त्रित्वसङ्ख्यया द्वितीयः पर्यायः, तृतीये च सप्तसङ्ख्या प्रथमपर्यायवत् प्रथमा त्रिरावृत्ता द्वितीया सकृत् तृतीया त्रिरावृत्तेत्येव सपादनीया। अत्र विष्टुतौ त्रिष्वपि पर्यायेषु तृचगताया मध्यमाया ऋच आवृत्तिराहित्यं भवतीत्येषा सप्तास्थिता निर्मध्याशब्देन व्यवह्रियते। अस्यैव स्तोमस्यानामिका विष्टुत्याख्यः पञ्चमो भेद एवम् प्रथमे पर्याये पञ्चसङ्ख्यासम्पत्तिः तृचगतानामृचां मध्ये प्रथमायास्त्रिरावृत्तिः द्वितीयतृतीययोस्तु सकृत्सकृत्पाठ इति। द्वितीये पर्याये त्रित्वसङ्ख्यासम्पादने तृचगतानामृचां क्रमेण सकृत्सकृत्पाठात्। तृतीये पर्याये नवसङ्ख्यासम्पादनम् तृचगतानां तिसृणामपि ऋचां प्रत्येकं त्रिस्त्रिः पाठात्। एवञ्च पर्यायत्रये क्रमेण पञ्चत्रिनवेतिसङ्ख्यामेलनेन सप्तदशसङ्ख्यासम्पत्तेरयं सप्तदशस्तोम इति पञ्चमो भेदोऽस्य विष्टुतेः। अस्यैव स्तोमस्योग्र्याख्यः षष्ठो विष्टुतिप्रकार इत्थम् प्रथमपर्याये तृचगताना क्रमेण तिसृणामृचां सकृत्पाठेन त्रित्वसङ्ख्यासम्पत्तिः, द्वितीये तृचगतानामृचां मध्ये प्रथमाया सकृत्पाठ द्वितीयस्यास्त्रिः तृतीयस्या सकृत्पाठ इति पञ्चत्वसङ्ख्यासम्पत्तिः, तृतीये पर्याये तृचगताना तिसृणामपि ऋचा त्रिस्त्रिरावृत्तिरिति नवत्वसङ्ख्यासम्पत्तिरिति पर्यायत्रयेणात्र त्रिपञ्चनवरूपसङ्ख्यामेलनेन सप्तदशसङ्ख्यासम्पत्तिः। एषा उद्यतीनामिका अस्य स्तोमस्य विष्टुतिरिति। अस्यैव स्तोमस्य सप्तमो विष्टुतिप्रकारो भद्रानामक इत्थम् अत्र प्रथमे पर्याये सप्तसङ्ख्यासम्पत्तिः तृचगतनामृचां मध्ये प्रथमाया द्वितीयायाश्च त्रिस्त्रिरावृत्तिः तृतीयायाश्च सकृत्पाठ इति मिलित्वा सप्त प्रथमः पर्यायः, तृचे प्रथमा सकृत् द्वितीया त्रिरावृत्ता तृतीया सकृदिति पञ्चत्वसङ्ख्यासम्पत्ति। द्वितीये पर्याये। तथा तृचे प्रथमाद्वितीये सकृत्सकृत् तृतीयातु त्रिरावृत्ता इति पञ्चसङ्ख्यासम्पत्तिस्तृतीयः पर्यायः। अत्रापि पर्यायत्रये क्रमेण सप्तपञ्चपञ्चेति सङ्ख्याभिः सप्तदशत्वसङ्ख्यासंपत्तेरसौ सप्तदशस्तोमः। इयं भद्रानामिका विष्टुतिः सप्तमीत्येवं सप्तविष्टुतिकः सप्तदशस्तोमः। एकविंशस्तोमस्य विष्टुतिचतुष्टयम् सप्तसप्तिनी, उद्यती, प्रतिष्टुतिः, सूर्मीतिभेदात्। तत्र सप्तसप्तिनी यथा, तृचे प्रथमाया द्वितीययास्त्रिरावृत्तिः, तृतीयस्याः सकृत्पाठ इति सप्तसङ्ख्यासंपत्तिः प्रथमः पर्यायः, तृचे प्रथमायाः सकृत्पाठो द्वितीयातृतीययोस्तु त्रिस्त्रिरावृत्तिरिति सप्तसङ्ख्यासम्पत्त्या द्वितीयः पर्यायः, तृचे प्रथमायास्त्रिरावृत्तिर्द्वितीयायाः सकृत्पाठस्तृतीयायास्त्रिरावृत्तिरिति सप्तसङ्ख्यासम्पत्त्या तृतीयः पर्यायः। अत्र पर्यायत्रये सप्तत्रयेणैकविंशतिसंख्यापूरणादसौ सप्तसप्तिनीनामिका एकविंशस्तोमस्य विष्टुतिः। अयं प्रथमः प्रकारः। अस्यैव स्तोमस्योद्यतीनामिका द्वितीया विष्टुतिरेवम् तृचे प्रथमाया ऋचस्त्रिरावृत्तिः द्वितीयतृतीययोः सकृत्सकृत्पाठ इति पञ्चसंख्यासम्पत्तिः प्रथमः पर्यायः, तृचे प्रथमायाः सकृत्पाठो

प्रातिपदिकान्तोदात्तत्वम्। स्तोमशब्दः। "अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्" (उ० १।१३८) इति स्तौतेर्मन्प्रत्ययान्तः स्तोमशब्दो नित्त्वादाद्युदात्तः।

द्वितीयतृतीययोर्ऋचोस्त्रिस्त्रिरावृत्तिरिति सप्तसङ्ख्यासम्पत्तिर्द्वितीयः पर्यायः, तृचगतानामृचां प्रत्येकं त्रिस्त्रिरावृत्त्या नवसङ्ख्यासंपत्त्या तृतीयः पर्याय इति साकल्येन, त्रिभिः पर्यायैः क्रमेण पञ्चसप्तनवसङ्ख्याभिरेकविंशति-सङ्ख्यापूरणादस्य एकविंशतिस्तोमस्य विष्टुतिरुद्याख्या संपद्यते। एतस्यैव स्तोमस्य तृतीया परिष्टुत्याख्या विष्टुतिरेवम् तृचगतानाम् ऋचां प्रत्येकं त्रिरावृत्तिरिति नवसङ्ख्यासम्पत्त्या प्रथमः पर्यायः, तृचे प्रथमायाः सकृत्पाठो द्वितीयस्यास्त्रिरावृत्तिस्तृतीयस्याः सकृत्पाठ इति पञ्चसङ्ख्यासम्पत्त्या द्वितीयः पर्यायः, तृचे प्रथमाया-स्त्रिरावृत्तिर्द्वितीयायाः सकृत्पाठस्तृतीयस्यास्त्रिरावृत्तिरिति सप्तसङ्ख्यासम्पत्त्या तृतीयः पर्यायः। एवं साकल्येन पर्यायत्रयेण क्रमशो नवपञ्चसप्तसङ्ख्याभिरेकविंशतिसङ्ख्यापूरणादेकविंशस्तोमस्य विष्टुतिरसौ। अस्या नाम परिष्टुतिरिति। एवमेतस्यैव स्तोमस्य चतुर्थी सूर्मीनाम्नीका विष्टुतिरित्थम् तृचगतानामृचां प्रतिस्वं त्रिस्त्रिरावृत्तिरिति नवसङ्ख्यापूरणात्प्रथमः पर्यायः, तृचगतानामृचां क्रमेण सकृत्पाठो द्वितीयः पर्यायस्त्रिसङ्ख्यायुतः, तृतीये पर्याये प्रथमपर्यायवत्तृचगतानामृचां प्रत्येकं त्रिस्त्रिरावृत्तिर्नवसङ्ख्यायुता। एवं च साकल्येनात्र त्रिभिः पर्यायैः क्रमेण नवत्रिनवेत्यवमेकविंशतिसङ्ख्यापूरणादसावपि एकविंशस्तोमस्य विष्टुतिः सूर्म्याख्या। एवं त्रिणवस्तोमस्य विष्टुतिद्वयं भवति प्रतिष्ठिता एवमुद्यती नामस्याम्। तत्र प्रथमा प्रतिष्ठितानाम्निका विष्टुतिरेवम् तृचे प्रथमायास्त्रिरावृत्तिः, मध्यमायाः पञ्चवारमावृत्तिरन्तिमायाः सकृत्पाठ इति मिलित्वा नवसङ्ख्या-पूरणेन प्रथमः पर्यायः। एवं तृचगतानामृचां मध्ये प्रथमायाः सकृत्पाठो द्वितीयस्यास्त्रिरावृत्तिस्तृतीयस्याः पञ्चवारमावृत्तिरिति नवसङ्ख्यापूरणेन द्वितीयः पर्यायः, एवं तृतीये पर्याये तृचे प्रथमायाः पञ्चवारमावृत्तिः, द्वितीयायाः सकृत्पाठस्तृतीयायास्त्रिरावृत्तिरिति साकल्येन नवसङ्ख्यापूरणेनासौ तृतीयः पर्यायः। तदेवं पर्यायत्रयेण नवकत्रयेण सप्तविंशतिसङ्ख्यापूरणेनासौ त्रिणवस्तोमस्य विष्टुतिः प्रतिष्ठितेति नाम। अस्यैव स्तोमस्य द्वितीया उद्यती नामिकैवम् तत्र प्रथमे पर्याये तृचगतायाः प्रथमायास्त्रिरावृत्तिः द्वितीयाया अपि त्रिरावृत्तिस्तृतीयस्याः सकृत्पाठ इति सप्तसङ्ख्यापूरणेन प्रथमः पर्यायः। एवं तृचे प्रथमायाः सकृत्पाठो द्वितीयस्यास्त्रिः पाठस्तृतीयस्याः पञ्चवारं पाठ इति नवसङ्ख्यापूरणेन द्वितीयः पर्यायः, एवं तृचे प्रथमायाः पञ्चवारं पाठो द्वितीयतृतीययोस्त्रिस्त्रिरावृत्तिरिति एकादशसङ्ख्यापूरणेन तृतीयः पर्यायः। एवञ्चात्र पर्यायत्रयेण क्रमेण सप्तनवैकादशसङ्ख्याभिः सप्तविंशतिसङ्ख्यापूरणादेषा त्रिणवस्तोमस्योद्यती-नामिका विष्टुतिर्द्वितीया भवति॥ एवं त्रयस्त्रिंशस्तोमस्य पञ्च विष्टुतयो भवन्ति समभ्यशा, नेदीयसङ्क्रमा, उद्यती, प्रत्यवरोहिणी, एवमन्तिमा चेति पञ्चप्रकाराः। तत्र समभ्यशाख्या त्रयस्त्रिंशस्तोमस्य प्रथमा विष्टुतिरेवम् तृचे प्रथमायास्त्रिरावृत्तिर्द्वितीयायाः सप्तवारमावृत्तिस्तृतीयायाः सकृत्पाठ इति प्रथमे पर्याये एकादशभिर्ऋग्भिः सङ्ख्यापूरणम्, एवं तृचगतायाः प्रथमायाः सकृत्पाठो द्वितीयस्यास्त्रिरावृत्तिस्तृतीयस्याः सप्तवारमावृत्तिरिति एकादशसङ्ख्यापूरणेन द्वितीयः पर्यायः, एवं तृचे प्रथमायाः सप्तवारमावृत्तिर्द्वितीयस्याः सकृत्पाठस्तृतीयस्यास्त्रिरावृत्तिरिति मिलित्वैकादशसङ्ख्यापूरणेनासौ तृतीयः पर्यायः। एवमेतैरेकादशकै-स्त्रिभिः पर्यायैस्त्रयस्त्रिंशत्सङ्ख्यासम्पादनादसौ त्रयस्त्रिंशस्तोमस्य प्रथमा समभ्यशाख्या विष्टुतिः। अस्यैव स्तोमस्य नेदीयःसङ्क्रमाख्या द्वितीया विष्टुतिरित्थम् तृचगतायाः प्रथमायास्त्रिरावृत्तिर्द्वितीयायाः पञ्चवार-मावृत्तिस्तृतीयायास्त्रिरावृत्तिरिति मिलित्वैकादशसङ्ख्यापूरणात्प्रथमः पर्यायः। एवं तृचगतयोः प्रथमा-

स्तोमं वहन्तीति स्तोमवाहसः। "वहिहाधाञ्भ्यश्छन्दसि" ( उ० ४।२२० )

---

द्वितीययोर्ऋचोस्त्रिरावृत्तिस्तृतीयस्याः पञ्चवारमावृत्तिरिति एकादशसंख्यया द्वितीयः पर्यायः। तृतीये च पर्याये तृचे प्रथमायाः पञ्चवारमावृत्तिर्द्वितीयतृतीययोस्त्रिस्त्रिः पाठ इति एकादशसङ्ख्यापूरणात्तृतीयः पर्यायः। एवमेतैस्त्रिभिरेकादशकैः पर्यायैस्त्रयस्त्रिंशत्सङ्ख्यापूरणादसौ त्रयस्त्रिंशस्तोमस्य विष्टुतिर्नेदीयःसंक्रमाख्या द्वितीया। एवमस्यैव स्तोमस्योद्यतीनामिका तृतीया विष्टुतिरित्थम्—तृचगतायाः प्रथमायास्त्रिरावृत्तिः द्वितीयस्याः पञ्चवारमावृत्तिस्तृतीयस्याः सकृत्पाठ इति नवसङ्ख्यापूरणेन प्रथमः पर्यायः, एवं तृचगतायाः प्रथमायाः सकृत्पाठो द्वि॰॰यस्यास्त्रिः पाठस्तृतीयस्याः सप्तवारमावृत्तिरिति मिलित्वैकादशसङ्ख्यापूरणेन द्वितीयः पर्यायः, एवं तृतीये पर्याये तृचे प्रथमायाः सप्तवारमावृत्तिर्द्वितीयतृतीययोस्त्रिस्त्रिरावृत्तिरिति मिलित्वा त्रयोदशसङ्ख्यापूरणमिति असौ तृतीयः पर्यायः। तदेवमेभिस्त्रिभिः पर्यायैर्मिलित्वा नवैकादशत्रयोदशभिः सङ्ख्याभिस्त्रयस्त्रिंशत्संख्यापूरणादसौ त्रयस्त्रिंशस्तोमस्य विष्टुतिरुद्यती नाम। एवमस्यैव स्तोमस्य चतुर्थी प्रत्यवरोहिणीनामिका विष्टुतिर्भवति। सा चेत्थम् तृचे प्रथमायास्त्रिरावृत्तिर्द्वितीयतृतीययोः प्रत्येकं पञ्चवारमावृत्तिरिति त्रयोदशसङ्ख्यापूरणेनासौ प्रथमः पर्यायः, एवं तृचे प्रथमायाः पञ्चवारमावृत्तिर्द्वितीयतृतीययोस्त्रिस्त्रिरावृत्तिरित्येकादशसंख्यासंपादनेनासौ द्वितीयः पर्यायः, एवं तृतीये पर्याये तृचगतानां तिसृणामृचां प्रत्येकं त्रिस्त्रिरावृत्तिरिति मिलित्वा नवसङ्ख्यासंपादनमिति तृतीयः पर्यायोऽसौ। तदेवमेभिः पर्यायैस्त्रयोदशैकादशनवभिस्त्रयस्त्रिंशत्संख्यापूरणमित्यसावुक्तत्रयस्त्रिंशस्तोमस्य विष्टुतिः प्रत्यवरोहिणी नाम। एवमस्य स्तोमस्यान्या विष्टुतिः पञ्चमीत्थं भवति—प्रथमे पर्याये तृचे प्रथमायास्त्रिरावृत्तिर्द्वितीयायाः सप्तवारमावृत्तिस्तृतीयायाः पञ्चवारमावृत्तिरिति पञ्चदशसङ्ख्यासंपादनेन प्रथमः पर्यायः। एवं द्वितीये पर्याये तृचगतायाः प्रथमायाः पञ्चवारमावृत्तिर्द्वितीयतृतीययोः प्रत्येकं त्रिस्त्रिरावृत्तिरिति एकादशसङ्ख्यापूरणमिति द्वितीयः पर्यायः। एवं तृचे प्रथमायास्त्रिरावृत्तिर्द्वितीयायाः सकृत्पाठस्तृतीयायास्त्रिरावृत्तिरिति तृतीयः पर्यायः सप्तसङ्ख्यासंपादनेन। एवमेतैस्त्रिभिः पर्यायैः क्रमेण पञ्चदशैकादशसप्तभिः सङ्ख्याभिस्त्रयस्त्रिंशत्सङ्ख्यापूरणमित्यसौ त्रयस्त्रिंशस्तोमस्य विष्टुतिरन्तिमा भवति॥ चतुर्विंशस्तोमस्यैकैव विष्टुतिः सा चेत्थम्--तृचे प्रथमायास्त्रिरभ्यासः, द्वितीयायाश्चतुरभ्यासः, तृतीयायाः सकृत्पाठ इति मिलित्वाऽष्टसङ्ख्यापूरणात्प्रथमः पर्यायः। एवं तृचे प्रथमायाः सकृत्पाठः, द्वितीयस्यास्त्रिरावृत्तिः, तृतीयस्याश्चतुष्पाठः इति मिलित्वाऽष्टसङ्ख्यासंपत्त्या द्वितीयः पर्यायः, एवं तृचे प्रथमायाश्चतुरभ्यासो द्वितीयस्याः सकृत्पाठस्तृतीयस्यास्त्रिरभ्यास इति मिलित्वा अष्टौ भवन्तीत्येवं तृतीयः पर्यायः। एवमेतैरष्टकत्रयैश्चतुर्विंशतिसङ्ख्यापूरणादसौ चतुर्विंशस्तोमस्य विष्टुतिरिति॥ चतुश्चत्वारिंशस्तोमस्य तिस्रो विष्टुतयः—प्रथमा, निर्मध्या, तृतीयेति। तत्र प्रथमा विष्टुतिरेवम्—तृचे प्रथमायास्त्रिरावृत्तिः द्वितीयस्या एकादशवारमावृत्तिः, तृतीयस्याः सकृत्पाठ इति मिलित्वा पञ्चदशसंख्यापूरणादसौ प्रथमः पर्यायः, एवं तृचे प्रथमायाः सकृत्पाठः द्वितीयस्यास्त्रिरावृत्तिः, तृतीयस्या दशवारं पाठ इति मिलित्वा चतुर्दशसङ्ख्यापूरणादसौ द्वितीयः पर्यायः, एवं तृचे प्रथमाया एकादशवारमावृत्तिः, द्वितीयस्याः सकृत्पाठस्तृतीयस्यास्त्रिः पाठ इति पञ्चदशसङ्ख्यापूरणेनासौ तृतीयः पर्यायः। तदेवं त्रिभिः पर्यायैर्मिलित्वा पञ्चदश चतुर्दश पञ्चदशेति मिलित्वा चतुश्चत्वारिंशत्सङ्ख्यापूरणादसौ चतुश्चत्वारिंशस्तोमस्य विष्टुतिः प्रथमा। अस्यैव स्तोमस्य निर्मध्याख्या द्वितीया विष्टुतिरेवम्—तृचे प्रथमायास्त्रिरावृत्तिर्द्वितीयाया दशवारमावृत्तिस्तृतीयायाः सकृत्पाठः इति चतुर्दशसङ्ख्यापूरणेन प्रथमः पर्यायः। एवं तृचे प्रथमायाः सकृत्पाठो द्वितीयस्यास्त्रिरावृत्तिस्तृतीयस्या एकादश-

इत्यमुनप्रत्ययः । तत्र "णिद्" इत्यनुवृत्तेः "अत उपधाया" ( पा०

---

वारमावृत्तिरिति पञ्चदश सङ्ख्यासम्पादनेन द्वितीयः पर्यायः । एवं तृचे प्रथमाया एकादशवारमावृत्तिर्द्वितीयायाः सकृत्पाठस्तृतीयस्यास्त्रिरावृत्तिरिति पञ्चदशसङ्ख्यापूरणेन तृतीयः पर्यायः । तदेवं त्रिभिः पर्यायैर्मिलितैश्चतुर्दश पञ्चदशपञ्चदशेति मिलित्वा चतुश्चत्वारिंशत्संख्यापूरणादसौ चतुश्चत्वारिंशस्तोमस्य निर्मध्याख्या द्वितीया विष्टुतिः । एवमस्यैव स्तोमस्य तृतीया विष्टुतिरित्थम्-तृचे प्रथमायास्त्रिरावृत्तिर्द्वितीयाया एकादशवारमावृत्तिः तृतीयायाः सकृत्पाठ इति पञ्चदशसङ्ख्यासम्पादनेन प्रथमः पर्यायः, एवं तृचे प्रथमायाः सकृत्पाठो द्वितीयायास्त्रिरावृत्तिस्तृतीयस्या एकादशवारमावृत्तिरिति पञ्चदशसङ्ख्यापूरणेन द्वितीयः पर्यायः एवं तृचे प्रथमाया दशवारमावृत्तिर्द्वितीयायाः सकृत्पाठस्तृतीयस्यास्त्रिरावृत्तिरिति चतुर्दशसङ्ख्यापूरणेनासौ तृतीयः पर्यायः । तदेवमेतैस्त्रिभिः पर्यायैः पञ्चदशपञ्चदश चतुर्दशइति चतुश्चत्वारिंशत्सङ्ख्यापूरणादसौ चतुश्चत्वारिंशस्तोमस्य तृतीया विष्टुतिरिति ॥ एवं स्तोमेष्वन्तिमस्याष्टाचत्वारिंशस्तोमस्य विष्टुतिद्वयम्-प्रथमा नेदीयःसंक्रमा चेति । तत्र द्वितीया यथा-तृच प्रथमातृतीययोस्त्रिरावृत्तिर्द्वितीयाया दशवारमभ्यासः प्रथमे पर्याये, द्वितीये पर्याये प्रथमाद्वितीययोस्त्रिस्त्रिरावृत्तिस्तृतीयाया दशवारमावृत्तिः, तृतीये पर्याये तृच आद्याया दशवारमावृत्तिर्द्वितीयातृतीययोस्त्रिस्त्रिरावृत्तिरिति । तदेवं त्रिभिः षोडशकैः पर्यायैरष्टाचत्वारिंशत्सङ्ख्यापूरणादसावष्टाचत्वारिंशस्तोमस्य द्वितीया विष्टुतिः । एषास्य स्तोमस्य नेदीयःसंक्रमाख्या द्वितीया विष्टुतिः । प्रथमा यथा तृचे प्रथमायास्त्रिरावृत्तिर्द्वितीयाया द्वादशवारमावृत्तिस्तृतीयायाः सकृत्पाठ इति षोडशसङ्ख्यापूरणेन प्रथमः पर्यायः, एवं तृचे प्रथमायाः सकृत्पाठो द्वितीयायास्त्रिरावृत्तिस्तृतीयाया द्वादशवारं पाठ इत्येवं षोडशसङ्ख्यया द्वितीयः पर्यायः, एवं तृचे प्रथमाया द्वादशवारमावृत्तिर्द्वितीयायाः सकृत्पाठस्तृतीयायास्त्रिरावृत्तिरिति षोडशसङ्ख्यासंपादनेन तृतीयः पर्याय इत्येवं षोडशकपर्यायत्रयेणाष्टाचत्वारिंशत्संख्यापूरणेनासावष्टाचत्वारिंशस्तोमस्य प्रथमा विष्टुतिरिति । एवमेतेषां स्तोमानां त्रिवृदादीनां तस्मिंस्तस्मिन्यागे वोढारो यथायोगं प्रवक्तार इत्यर्थः ।

(६) अत्र मन्त्रे यद्यपि ऋत्विजामेव बोधकं विशिष्टं पदं नास्ति सखायःपदं च समानख्यानेन हितकर्तृत्वेन हेतुना ऋत्विजामिवान्येषामपि बोधकम् । अतएवैन्द्रे सूक्ते क्वचन मरुत्परतयाऽपि तस्य वर्णना । एवं च तावन्मात्रेण नात्र ऋत्विक्परत्वनिर्णयस्तस्य । तथापि अत्र मन्त्रवाक्ये गायतेति प्रधानायाः क्रियाया बहुवचनान्तगायतशब्देन वचनाद्बहुत्वोपेतकर्तृपदस्य सखिपदार्थं हित्वाऽन्यबोधकस्यात्र वाक्येऽसत्त्वात् स्तोमवाहस इति विशेषणाच्च सखिशब्दस्य ऋत्विक्परत्वं निर्णीय भाष्यकृता सखाय ऋत्विज इति व्याख्यातम् । तेषामेव यज्ञे सामगानकर्तृत्वम् । यद्यपि गैधातुः शब्दार्थकः "गै शब्दे" इति पाणिनिना धातुपाठे तदर्थनिर्देशात्, तथापि सामान्यपरस्य शब्दस्य विशेषपरताया लोकेऽपि दर्शनात् स्तोमवाहस इत्यत्र स्तोमशब्दवचनात् स्तोमशब्दस्य वैदिकप्रसिद्ध्या सामगानायोपादीयमानावृत्ततृचगतर्क्सङ्घे रूढत्वेन सामसम्बन्धित्वादत्र गैशब्देन सामगानरूपस्य शब्दविशेषस्य वचनम् । सामगानस्य ग्रहणेतु ऋत्विग्विशेषाणामौद्गात्राणां ग्रहणं प्रसज्येत तथा सति सखायः उद्गातृप्रमुखा ऋत्विज इति व्याख्येयमासीत् परंतु तस्य शब्दस्य ऋत्विज इति ऋत्विक्सामान्यपरतया व्याख्यानेनायमत्र भाष्यकाराभिप्रायः—ऋत्विक्शब्दस्यापि सामान्यपरस्य ऋत्विग्विशेषपरत्वं पूर्वप्रदर्शितन्यायात् । अतएव गायतेत्यस्य व्याख्याने स्तुतेति स्तुधातोः प्रयोगः । यद्यपि स्तुधातुःस्तुतिसामान्यं ब्रवीति तथापि तस्य प्रशब्दयोगात् सामगानरूपप्रकृष्टस्तुतिपरत्वम् । अतएव

७।२।११६ ) इत्युपधाया वृद्धिः । कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते "गतिकार-

---

स्तोमशब्दव्याख्याने त्रिवृत्पञ्चदशादिस्तोमानिति व्याख्यातं तेन। वस्तुतस्त्वस्य मन्त्रस्य मैत्रावरुणेन ऋत्विजा यज्ञे पठ्यमानत्वात्तस्य च गानकर्तृत्वाभावात् तदीयशस्त्रे एवास्य विनियोगात् शस्त्रशब्दस्य च गानरहित-मन्त्रसाध्यस्तुतिपरत्वात् विनियोगानुसारेण गायतेत्यस्य स्तुतिमात्रपरत्वं नतु गानयुक्तस्तुतिपरत्वम्, तस्या प्रकर्षस्त्वाधिक्यमेव नतु सामगानरूपः प्रकर्षः, विनियोगविरोधात्। स्तोमशब्दोऽपि नात्रावृत्ततृचगतर्क्सङ्घ विशेष-परः किंतु ऋक्समुदायमात्रपरः विनियोगानुरोधादेव। मैत्रावरुणेन स्वीयशस्त्रेऽनेकासामृचां शस्यमानत्वात् ऋक्समुदायवाहकत्वस्य त्वाक्षतेः। अस्मिन् कल्पे सखाय इति बहुवचनस्यादरार्थतयोपपत्तिः। अतएव मन्त्रेऽत्र आङ्पदाभ्यामेनादरो द्योत्यत इति आदरार्थोऽभ्याम इति वर्णनेन भाष्यकृता स्पष्टीकृतम्। स्तोमपदार्थव्याख्यानं तु भाष्यकृत उक्तानुरोधेन त्रिवृत्पञ्चदशौ आदी येषां ते त्रिवृत्पञ्चदशादयः। स्तोम-समुदायोऽत्रान्यपदार्थः। तेषां त्रिवृत्पञ्चदशादीनां स्तोमविशेषाणां ये स्तोमा ऋचां सङ्घास्तान्वहन्ति प्रापय-न्तीत्यर्थकरणेन सामगैः सामगानार्थमुपादीयमानस्तोमीयऋक्सङ्घस्य गानरहितकेवलरूपेण शस्त्रिभिर्ऋत्विग्भि-र्वचनादविरोधात्। अतएव ब्राह्मणे उच्यमान 'यथा वै स्तोत्रमेवं शस्त्रम्, स्तोत्रमग्रे शस्त्राद्' इति च नपपद्यते। वस्तुतस्तु अत्र 'गायत सखायः स्तोमवाहसः' पदानां सामान्यपरत्वेनानिर्णय एवार्थविषये अतो भाष्योक्तार्थ-प्रदर्शनवत् एवमर्थोऽपि अत्र वर्णयितुं सुशकः -- एतस्य सूक्तस्यैन्द्रत्वात् "प्रायेणैन्द्रे सूक्ते मरुतः स्तूयन्ते" इति अनुक्रमणिकाकारेण वचनात्, "आदहस्वधामनुपुनर्गर्भत्वमेरिरे" इति मन्त्रव्याख्यावसरे बहुवचनान्तेन लिङ्गेन मरुत्परत्वेन भाष्यकृता व्याख्यानात, मरुतामिन्द्रसखिरूपतायाः "मरुत्सख" इत्यनेन ऐन्द्रीषु निरुक्तिसु स्पष्टमुक्ते:, "मरुद्भिरिन्द्र सख्यन्ते अस्तु" इत्यादिस्थले मन्त्रेष्वपि वचनात्सखायोऽत्र मरुत एव। मरुतां सख्यं चैतरेयब्राह्मणे एवं प्रपञ्चितम् इन्द्रस्य सर्वदेवसाहित्येन वृत्रेण साकं युद्धे प्रवृत्ते वृत्रेण माययाऽतिभीषण-रूपप्रदर्शने भीताः सर्वे देवा इन्द्रं युद्धे परित्यज्य पलायिताः। तदानीं मरुत एव केवलास्तमिन्द्रं "प्रहर भगवो जहि वीरयस्व" इत्यादिरूपाः प्रोत्साहनपरा वाचो वदन्तो न परित्यक्तवन्तः। अतस्तैः साकमिन्द्रस्य अजर्यं सख्यमिति। अयमर्थ ऋग्वेदे "वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुः" इति मन्त्रे स्पष्टीक्रियत इति तत्रोक्तम्। मरुतां च गणदेवतात्वात्स्तोमेन समुदायेन वाहकत्वं गन्तृत्वं यज्ञनिर्वाहकत्वं वेति तेषां स्तोमवाहस इति वर्णनमपि न विरुध्यते। मरुद्भिरिन्द्रस्य वाग्भिः प्रोत्साहनकरणात् वाग्भिः प्रोत्साहनात्मकस्य शब्दनस्यापि गैधातुतो बोधात्। बहुवचनान्तेन लिङ्गेन सूक्तस्यैन्द्रत्वेन मरुतः प्रत्यक्षीकृत्य ऋषिरत्र ब्रवीति हे स्तोमवाहसः सङ्घेन गन्तारः सखाय इन्द्रस्य हितकर्तारो मरुद्रूपा देवा आगच्छत आगत्यात्रास्माकं देशे निषद्येन्द्रं शब्दयत प्रोत्साहयतेति। मरुतां वायुरूपत्वात्तस्य वायोः शब्दकरणस्यैव प्रत्यक्षविषयत्वादपि अत्र मरुत उद्देशेन गायत शब्दयतेति वचनं मन्त्रे। वायोः शब्द एव प्रत्यक्षविषयो भवतीति लोकप्रसिद्धम्। वेदेऽप्युच्यते "ध्राजिरेकस्य ददृशे न रूपम्' इत्यत्र मन्त्रे। ध्राजि शब्द इति सर्वे व्याख्यातारः। 'ध्रज ध्रजि ध्वज ध्वजि शब्दे' इति गणपाठे शब्दार्थेषु धातुषु ध्रजधातोः पाठं कुर्वन् पाणिनिरप्यत्रार्थेऽनुकूलः। मन्त्रे देवतानां वर्णने निरुक्तकारेण प्रकारत्रयमुच्यन्ते ऋचां, त्रैविध्यप्रदर्शनव्याजेन तदुक्तं तेन "तास्त्रिविधा ऋचः परोक्षकृताः प्रत्यक्षकृताः आध्यात्मिक्यश्चेति। तासां लक्षणमपि तत्रैवं कृतम् – तत्र "परोक्षकृताः सर्वाभिर्ना-मविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य, प्रत्यक्षकृता मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना, आध्या-त्मिक्य उत्तमपुरुषयोगा अहमिति चैतेन सर्वनाम्नेति"। एवं चात्र मरुतः प्रत्यक्षीकृत्योक्तार्थपरोऽयं प्रत्यक्षीकृतो

कोपपदयोरपि पूर्वपदप्रकृतिस्वरत्वं च" ( उ० ४।२२६ ) इत्यौणादिकसूत्रात्समास आद्युदात्तः* ॥ १ ॥

मन्त्रः। अत्र गायतेति मध्यमपुरुषयोगात्प्रत्यक्षकृतत्वम्। मरुतां प्रत्यक्षीकाराद् मरुतां स्तुतिरेवेति भवति। मरुतां स्तुत्याऽपीन्द्रः स्तुतो भवतीति "प्रायेणैन्द्रे मरुतः स्तूयन्ते" इति वचनतो विस्पष्टं भवति। किञ्च सम्बन्धिपदार्थस्तुतिनिन्दाभ्यां तत्सम्बन्धिनः पदार्थान्तरस्यापि स्तुतिनिन्दे भवत इति लोकप्रसिद्धम्। यथा राज्ञः शौर्ये वर्णनीये तत्प्रतिद्वन्द्विशत्रोः प्राचुर्येण स्तवेन वर्णनीयस्य राज्ञ एव स्तुतावुत्कर्षो भवति तादृशस्यापि शत्रोरयं समुच्छेत्तेति। यथा रामायणे रावणस्यैव बहुलसमृद्ध्यादिमत्तया देवताविजेतृत्वादिवर्णनतो रामस्य पराक्रमाधिक्यं प्रतीयते तादृस्यापि रावणस्य तेन विनाशनात्। एवं सम्बन्धिनिन्दया च सम्बन्धिपदार्थान्तरनिन्दा यथा रामेण शैवधनुर्भङ्गे क्रुद्धस्य युद्धार्थं समागतस्य भार्गवस्याधिक्षेपावसरे तदीयपरशोरेवाधिक्षेपेण तस्य निन्दनमिति 'अनेन छिन्दता मातुः कण्ठं बद्धस्पर्द्धःत्परशुना कृपाणो मम लज्जते' इति महाकविभिरुपनिबद्धं सङ्गच्छते। एवं सखिभूतानां स्तुत्याऽपीन्द्रस्य स्तुतत्वं भवतीति मरुद्वर्णनेऽपि नैन्द्रत्वविरोधः सूक्तस्य। तस्मादेवमर्थपरताऽप्यस्य मन्त्रस्यानुक्रमणिकाकारमतानुरोधिनीति केचित् इति दिक्।

x आत्वेता। आ। उपसर्गत्वाद् "उपसर्गाश्चाभिवर्जम्" इति आद्युदात्तः। उपसर्गाणां निपातत्वात् "निपाता आद्युदात्ता" इति वा आद्युदात्तत्वम्। तु। अयमपि निपात इति आद्युदात्तः। आ। पूर्ववदाद्युदात्तः। इत। "इण् गतौ" इत्यस्माल्लोटि मध्यमपुरुषबहुवचने थे प्रत्यये तस्य तादेशे मध्ये शपि तल्लुकि ङित्त्वाद् गुणाभावे इतेति रूपम्। तत्र धातुस्वरो "धातोरि"ति प्रत्ययस्वरश्च "आद्युदात्तश्चे"ति प्राप्तौ। तत्र सति शिष्टत्वेन प्रत्ययस्वरेण बलवत्त्वाद्धातुस्वरस्य शेषनिघातेनानुदात्तत्वे इतशब्दोऽन्तोदात्तः प्राप्तः परन्तु प्रकृते तस्यातिङन्तपदात्परत्वात् "तिङ्ङतिङ" इति सर्वनिघातः। तत्र संहितायामिकारस्य पूर्ववर्तिनाऽऽकारेण गुणरूपैकादेशे एकादेशस्योदात्तानुदात्तोभयस्थानिकत्वेन स्थानिवत्त्वेनोभयधर्मकतया स्वरितत्वं प्राप्तं परंतु तस्यापवादकेन प्रकृते "एकादेश उदात्तेनोदात्त" इति सूत्रेणोदात्तत्वम्। तशब्दाकारस्य तु निशब्दीय उदात्तः पर इति "उदात्तस्वरितपरस्य सन्नतर" इति सन्नतरः। तस्याकारस्य "द्व्यचोऽतस्तिङ" इति दीर्घादेशे दीर्घस्याप्यनुदात्तस्थानिकतया स्थानिवत्त्वेनानुदात्तत्वम्। नि। निपातत्वादाद्युदात्तः। सीदत। "षद्लृ विशरणगत्यवसादनेषु" इति धातोर्लोटि मध्यमपुरुषबहुवचने थे तस्य तादेशे मध्ये शपि तस्मिन्परतः सदेर्धातोः "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदा" इति सूत्रेण सीदादेशे सीदतेति रूपम्। तत्र धातोः स्वरस्य निवर्तकतया प्रत्ययस्वरः प्राप्तः परंतु तस्याद्युपदेशात्परत्वेन "तास्यनुदात्तेन्ङिद्दुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोरि"त्यनेनानुदात्तत्वविधानाच्छपश्च पित्त्वेनानुदात्ततया धातोरेव स्वरस्यावशेषे प्राप्ते तस्यापि "तिङ्ङतिङ" इत्यनेन सर्वानुदात्तत्वविधानादनुदात्तत्वम्। संहितायां नीत्युपसर्गैकारादुदात्तात्परत्वा'दुदात्तादनुदात्तस्य स्वरित" इति स्वरित आद्यस्य सीकारस्य स्वरितात्परत्वाच्च परवर्तिनोर्द्वितीयतृतीययोः "स्वरितात्परेषामनुदात्तानामि'ति प्रचयः स्वरः प्राप्तः परंतु तकाराकारस्य परवर्तीन्द्रशब्दावयवोदात्तेकारेण गुणैकादेशे एकादेशस्यानुदात्तोदात्तोभयस्थानिकतया पूर्वव'देकादेश उदात्तेनोदात्त" इत्युदात्तत्वेन तस्मिन्परतो दकाराकारस्य "उदात्तस्वरितपरस्य सन्नतर" इति सन्नतरत्वम्। तृतीयस्य तु पूर्वोक्तरीत्योदात्तत्वम्। इन्द्रम्। इदिधातो रनि प्रत्यय औणादिके निदन्तत्वादाद्युदात्त इन्द्रशब्दः। शेषनिघातेनान्त्यानुदात्तत्वम्, तस्योदात्तात्परत्वात्स्वरितत्वम्। ततो द्वितीयैकवचनेऽमि प्रत्यये तस्य "अनुदात्तौ सुप्पिताव"ित्यनेनानुदात्तत्वम्। तेन सह पूर्वस्य "मि पूर्व"

स्क०—तुशब्दः पादपूरणः क्षिप्रपर्यायो वा। आ आ इत्युपसर्गाभ्यासात् तत्संबन्धिन इतेत्येतस्याख्यातस्याभ्यासः। आख्याताभ्यासे च लोके गम्यतां गम्यतामित्यादौ अवश्य—कर्त्तव्यता प्रतीयते। एवमत्रापि क्षिप्रमेत। क्षिप्रमवश्यमागच्छतेत्यर्थः। आगत्य च निषीदत उपविशत। यथास्थानं निषद्य च इन्द्रमभिप्रगायत। गायतिरर्चतिकर्मा। प्रकर्षेण स्तुत। हे सखाय ऋत्विजः। स्तोमवाहसः स्तोमानामिन्द्रं प्रति प्रापयितारः। स्तोतार इत्यर्थः॥ १॥

वे०—आगच्छत क्षिप्रमुद्गातारः। आगत्यच निषीदत गानार्थम्। अथेन्द्रमभिप्रगायत सखायः। प्रस्तावप्रतिहारोपगानोपनिधनस्तोमस्य नेतारः॥ १॥

इति पूर्वरूपैकादेशे तस्यानुदात्तद्वयस्थानिकतया स्थानिवत्त्वेनोदात्तत्वे तस्य पूर्वरीत्योदात्तात्परत्वात्स्वरितत्वम्। अभि। उपसर्गत्वादाद्युदात्तत्व प्राप्तं परं तु तस्य "अभिवर्जमि"ति पर्युदासादप्राप्तौ निपेधसामर्थ्यान्निपातत्व-निबन्धनस्याद्युदात्तत्वस्याप्यप्राप्तौ "अन्तोदात्तस्त्वभीत्ययमि"त्यनेनान्तोदात्तत्वं फिट्त्वेन वान्तोदात्तत्वं बोध्यम्। प्र। निपातत्वादुपसर्गत्वाद्वाद्युदात्तः। गायत। "गै शब्दे" इत्यस्माद्धातोर्लोटि मध्यमबहुवचने थे तस्य तादेशे मध्ये शपि आयादेशे गायतेतिरूपम्। तत्र "धातो"रित्यनेन धात्वन्त उदात्तः, थकारस्य तु प्रत्ययत्वेन "आद्युदात्तश्चे"त्यनेनादेरुदात्तत्वं शपः पित्त्वादनुदात्तत्वम् इति सति शिष्टत्वेन प्रत्ययस्वरावशेपे प्राप्ते तस्यापवादकेन प्रकृते "तास्यनुदात्तेदि"त्यनेन प्रत्ययस्यानुदात्तत्वविधानाद्धातुस्वरावशेषे प्राप्ते तस्यापि 'तिङ्ङतिङ' इत्यनेनातिङन्तपदात्परत्वात्सर्वनिघातेन निवृत्तौ सर्वानुदात्त पदम्। संहितायां प्रशब्दाकारा-दुदात्तात्परत्वा"दुदात्तादनुदात्तस्य स्वरित" इति स्वरित आद्यस्य। द्वितीयतृतीययोस्तु स्वरितात्परत्वात्प्रचयः स्वरः। सखायः। "समाने ख्यः स चोदात्त" इत्यौणादिकेन सूत्रेण समाने उपपदे "ख्या प्रकथन" इति धातोरिण् प्रत्ययो डित् समानस्य स्थाने सादेशश्च विधीयते तेन सखिशब्दो निष्पद्यते। ततस्तस्माच्छब्दाज्जसि प्रत्यये "सख्युरस-म्बुद्धावि"त्यनेन तस्य णिद्वद्भावेना"चो ञ्णिती"तिपूर्वस्येकारस्य वृद्धा"वेचोऽयवायाव" इत्यायादेशे सखाय इति पदम्। तत्र खिशब्दे प्रत्ययस्वरः, समानस्य शब्दस्य प्रातिपदिकत्वेनान्तोदात्ततया तत्स्थानिकस्य सादेशस्यापि स्थानिवत्त्वेनोदात्तत्वेन सशब्दस्य खिशब्दस्येति द्वयोरुदात्तत्वे प्राप्ते प्रत्ययस्य स्वरस्य सति शिष्टत्वेन तदीय-स्वरस्यावशेपे पूर्वसकारस्वरस्य चानुदात्तत्वेऽ"नुदात्तं पदमेकवर्जमि"त्यनेन प्राप्ते "ह्रस्वान्तस्य ह्रस्वमनृत्ताच्छील्ये" इत्यनेन सूत्रे "स चोदात्त" इति सकारस्य पूर्वोक्तरीत्योदात्तत्वे प्राप्तेऽपि पुनरुदात्तत्ववचनेन सतिशिष्टत्वबोधनेन वादेः स्वरस्योदात्तत्वविधानाच्छेपनिघातेनान्त्यस्यानुदात्तत्वम् इति सखिशब्द आद्युदात्तः। खीकारस्या-नुदात्तस्य स्थाने जातस्य वृद्धिसञ्ज्ञकैकारस्य तत्स्थानिकायादेशस्यच स्थानिवत्त्वेनानुदात्तत्वम्। जसस्तु सुप्तादनुदात्तेति सखायःशब्दे आदिरुदात्तो द्वितीयोऽनुदात्तोऽपि उदात्तात्पर इति स्वरितः 'उदात्तादनुदात्तस्य स्वरित" इत्यनेन तृतीयस्यानुदात्तत्वेऽपि पदतादशायां तस्य स्वरितात्परत्वा"त्स्वरितात्परेषामनुदात्तानामि"ति प्रचयः। संहितायां तु स्तोमवाहसःशब्दीयस्तोकाररूपोदात्तस्य परत्वात्सखायःशब्दीययकाराकारस्यो-"दात्तस्वरितपरस्य सन्नतर" इति सन्नतरापरपर्यायोऽनुदात्तः। अत्रोपर्युक्तव्युत्पत्त्यनुसारे पदपाठे सकारोत्तर-मवग्रहापेक्षा तदकरणं तु सखिशब्दस्याव्युत्पन्नतां बोधयति तदानींच प्रातिपदिकत्वादन्तोदात्तत्वे प्राप्ते तदपवादेन ह्रस्वान्तत्वादाद्भूतस्य ऋद्भिन्नस्य ह्रस्वस्योदात्तत्वमिति सकार उदात्तः। अवशिष्टं सर्वं पूर्वोक्तवत्। स्तोमवाहसः। "ष्टुञ् स्तुतावि"ति धातोः "अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिणीभ्यो मन्" इति-

द्वितीयामृचमाह :—

पु॒रू॒तमं॑ पुरू॒णामीशा॑नं॒ वार्या॑णाम् ॥

इन्द्रं॒ सोमे॒ सचा॑ सु॒ते ॥ २ ॥

पु॒रु॒ऽतमं॑म् । पु॒रू॒णाम् । ईशा॑नम् । वार्या॑णाम् ॥

इन्द्र॑म् । सोमे॑ । सचा॑ । सु॒ते ॥ २ ॥

सखायोऽभिप्रगायतेति पदद्वयमत्रानुवर्तते। हे सखाय ऋत्विजः सचा यूयं सर्वैः सह। यद्वा सचा परस्परसमवायेन सुते=अभिषुते सोमे प्रवृत्ते सतीन्द्रमभिप्रगायत। कीदृशमिन्द्रम्? पुरूतमम्। पुरून्बहूञ्छत्रूंस्तमयति ग्लापयतीति पुरूतमः। पुरूणाम्-बहूनां[1] वार्याणाम् वरणीयानां धनानामीशानम्—स्वामिनम् ॥

पुरूतमम्। "तमु ग्लाने" इति धातोरन्तर्भावितण्यर्थात्पचाद्यचि चित्त्वादन्तोदात्तेऽपि कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा "परादिश्छन्दसि बहुलम्" इत्युत्तरपदाद्युदात्तत्वम्। पुरूणाम्। "पॄ पालनपूरणयो"रित्यस्मात् कुरित्यनुवृत्तौ "पॄभिदिव्यधिगृधिधृषिदृशिभ्यः" (उ० १।२३) इति कुप्रत्ययः। कित्त्वाद् गुणनिषेधः। "उदोष्ठ्यपूर्वस्य" (पा० ७।१।१०२) इत्युकारः। "उरण्रपरः" (पा० १।१।५१)। प्रत्ययस्वरेणान्तोदात्तः पुरुशब्दः। ततो मतुपि ह्रस्वादन्तोदात्तात्पुरुशब्दात्परस्य नामो "नामन्यतरस्याम् (पा० ६।१।१७७) इत्यन्तोदात्तत्वम्।

मन् प्रत्यये उकारस्य गुणे स्तोमशब्दः। तदुपपदा"द्वह प्रापणे" इति धातो"र्वहिहाधाञ्भ्यश्छन्दसि" इत्यौणादिकेन सूत्रेणासुन्प्रत्ययो णिद्वद्भावश्च। ततस्तस्मिन्प्रत्यये धातोरुपधाकारस्योपधाया इत्यनेन वृद्धौ वाहस्शब्दस्तत उपपदसमासे स्तोमवाहःशब्दनिष्पत्तिस्तस्माज्जसि स्तोमवाहस इतिपदम्। तत्र स्तुधातुस्वरस्य मप्रत्ययस्वरेण सतिशिष्टेन बलीयसा निवृत्तौ प्राप्तायां तस्यापि प्रत्ययगतनित्त्वेनापवादने तन्निमित्तकस्य "ञ्नित्यादिर्नित्यमि"त्येतस्य निदन्तादेरुदात्तस्य स्वरस्य विधानाद्धातुस्वरस्यावशेषे स्तोमशब्द आद्युदात्तः। वाहःशब्देऽपि एवमेव नित्त्वस्वरेणाद्युदात्तता। ततः समासे समासान्तस्वरं बाधित्वा कृदुत्तरपदप्रकृतिस्वरे प्राप्ते "गतिकारकोपपदयोः प्रकृतिस्वरत्वंचे"ति औणादिकसूत्रेण कारकोपपदस्य प्रकृतिस्वरत्वबोधनेन स्तोमशब्दस्वर एव स्तोमवाहःशब्दे समासेऽपि इति सशब्द आद्युदात्तः शेषनिघातेनावशिष्टानामनुदात्तत्वं जसः सुप्त्वादनुदात्तता। तत्र द्वितीयस्य स्वरस्योदात्तात्परत्वात्स्वरितत्वम्, तृतीयादीनां तु स्वरितात्परत्वात्प्रचय इति बोध्यम्।

१ बहूनामिति पाठः पुस्तकान्तरे

ईशानम्। "ईश ऐश्वर्ये" इति धातोरनुदात्तेत्त्वात्परस्य शानचो लसार्वधातुकानुदात्तत्वम्। वार्याणाम्। "वृङ् संभक्तौ" इत्यस्मात् "ऋहलोर्ण्यत्" (पा० ३।१।१२४)। क्यविधौ हि वृञ एव ग्रहणं न वृङः (पा० ३।१।१०९।१)। "तित्स्वरितम्" (पा० ६।१।१८५) इति प्रत्ययस्वरितं बाधित्वा "ईडवन्दवृशंसदुहां ण्यतः" (पा० ६।१।२१४) इति ण्यदन्तस्याद्युदात्तत्वम्। "यतोऽनावः" (पा० ६।१।२१३) इत्यत्र तु ण्यतो ग्रहणं न भवति तस्य द्व्यनुबन्धकत्वात्। "एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य" इति नियमात्। सचा। "षच समवाये" धात्वादेः षः सः। "संपदादित्वाद्भावे क्विब्"ति (पा० ३।३।१०८) क्विप्। तृतीयैकवचनम्। धातुस्वरेणाद्युदात्तः। "सर्वे विधयश्छन्दसि विकल्पयन्त" इति (प० ३५) न्यायेन "सावेकाच" (पा० ६।१।१६८) इति सूत्रं न प्रवर्तते। सचेत्यस्य निपातत्वपक्षे स्पष्टमाद्युदात्तत्वम्* ॥ २ ॥

* पुरूतमम्। "पॄ पालनपूरणयोः" इत्यस्माद्धातोः "पॄभिदिव्यधिगृधिधृषिहृशिभ्यः" इत्यौणादिकेन सूत्रेण कुप्रत्यये कित्त्वाद् गुणनिषेधे "उदोष्ठ्यपूर्वस्य" इति ऋकारस्योत्त्वे रपरत्वे पुरुशब्दः। तदुपपदात् "तमु ग्लान" इति धातोरन्तर्भावितण्यर्थात्पचाद्यचि तमशब्दः। उपपदसमासे पुरुतम इति शब्द इति भाष्यकारः। तस्य द्वितीयैकवचनान्तस्य रूपं पुरूतममिति। अत्र पूर्वपदान्त्यस्य दीर्घश्छान्दसः। तत्र धातोः स्वरः कुप्रत्ययस्वरेण निवर्त्यतेऽतस्तत्स्थानिकस्योकारस्यापि स्थानिवत्त्वेनानुदात्तत्वमिति पुरुशब्दोऽन्तोदात्तः। तमेत्यत्रापि धातुस्वरस्य प्रत्ययस्वरेण निवृत्तौ प्राप्तायां प्रत्ययसामान्यस्वरस्यापवादकेन प्रकृते प्रत्ययगतचित्त्वनिबन्धनेन "चित" इति सूत्रविहितेनान्तोदात्तेन धातुस्वरनिवृत्त्या तमशब्दोऽपि अन्तोदात्तः। ततश्च पुरुतमशब्दयोः समासे "समासस्य" इत्यनेनान्तोदात्तत्वे प्राप्ते कृदुत्तरपदप्रकृतिस्वरेण तस्यैवानुमोदने पुरुतमशब्दोऽन्तोदात्तः प्राप्तः परन्तु "परादिश्छन्दसि बहुलम्" इत्यनेनोत्तरपदस्याद्युदात्तत्वविधानादत्रोत्तरपदस्यादिरुदात्त इति पुरुतमशब्दे शेषनिघातेनादिस्वरद्वयमनुदात्तमन्तिमश्च मकाराकारोऽनुदात्तः। अमिप्रत्यये तस्य सुप्त्वेनानुदात्तत्वात्तेन सह मकाराकारस्यानुदात्तस्यैकादेशे एकादेशनिष्पन्नस्यापि स्थानिवत्त्वेनानुदात्तत्वम्। तस्य चोदात्तात्परत्वात्स्वरित "उदात्तादनुदात्तस्य स्वरित" इत्यनेन। पुरुशब्दीयरेफोकारस्थाने जातस्य दीर्घस्यापि अनुदात्तस्थानिकतया स्थानिवत्त्वेनानुदात्तत्वमित्याद्यं स्वरद्वयमनुदात्तं तृतीय उदात्तश्चतुर्थोऽनुदात्तः सन्स्वरितः पुरुतमशब्दे। केचित्तु पुरूतममित्यत्र पुरुशब्दात्तमपमिच्छन्ति। तन्मते तमपः पित्त्वाद् "अनुदात्तौ सुप्पितौ" इत्यनुदात्तत्वे प्राप्ते व्यत्ययेन तमप आद्युदात्तता। अवशिष्टं सर्वं पूर्ववत्। पुरूणाम्। पुरुशब्दोऽन्तोदात्तः पूर्वमुक्तः। तस्मात्षष्ठीबहुवचने आमि नुटि नामो "नामन्यतरस्याम्" इत्यनेनोदात्तत्वे शेषनिघातेन पूर्वयोरनुदात्तत्वम्। "नामि" इति दीर्घोऽपि अनुदात्तपुरुशब्दीयरेफोकारस्थानिक इति स्थानिवत्त्वेनानुदात्तः। ईशानम्। "ईश ऐश्वर्ये" इति धातोर्लटि तस्य शानचि ईशानशब्दः। ततो द्वितीयैकवचनेऽमि पूर्वरूपे ईशानमिति पदम्। तत्र धातोः स्वरस्य "आद्युदात्तश्च" इति प्रत्ययाद्युदात्तेन सतिशिष्टेन निवृत्तौ प्राप्तायां ततोऽपि विशिष्टेन प्रत्ययगतचित्त्वनिमित्तकेन चित्स्वरेण प्रत्ययाद्युदात्तत्वस्य बाधनाच्चित्स्वरेण धातुस्वरस्य निवृत्तौ प्राप्तायां विशेषविहितेन "तास्यनुदात्तेन्-

स्क०—पूर्वमिन्द्रं गायतेत्युक्तम् तत्र कीदृशमिन्द्रम् ? पुरूतमम्। पुरुशब्दो बहुनाम। तमशब्दोऽपि नातिशयप्रत्ययः। अर्थासम्भवादुदात्तत्वाच्च। किन्तर्हि "तमु अभिकाङ्क्षायाम्" इत्यस्य रूपम्। बहुभिर्योऽभिकाङ्क्ष्यते प्रार्थ्यते याच्यते च स पुरूतमस्तं पुरूतमम्। पुरूणां बहूनामीशानम् स्वामिनम्। वार्याणां वरणीयानामुत्कृष्टानां धनानाम्। इन्द्रम्। क्रियाशब्देनेदमिन्द्रस्य गुणाभिधानं न नाम्ना प्रतिनिर्देशः। कुत एतत् ? अस्यामृचि आख्याताभावात् पूर्वयत्रैकवाक्यत्वात्। तस्यां चेन्द्रशब्दस्य नाम्नो विद्यमानत्वात्। "इदि परमैश्वर्ये"। अत्यन्तेश्वरमित्यर्थः। कदा पुनस्तवाम ? उच्यते। सोमे सचा सुते। सचा सहेत्यर्थः। सर्वैर्ऋत्विग्भिः सहाभिषुते। कालोपलक्षणम्। अभिषवोत्तरकालमित्यर्थः ॥ २ ॥

वे०—बहूनामुपक्षपयितारम्। गवामसि गोपतिरित्यनेन समानो निर्देशः। धनानामीश्वरमिन्द्रमभिप्रगायत सहाभिषुते सोमे ॥ २ ॥

तृतीयामृचमाह : -

स घा नो योग आ भुवत्स राये स पुरंध्याम् ॥
गमद्वाजेभिरा स नः ॥ ३ ॥

सः । घ । नः । योगे । आ । भुवत् । सः । राये । सः । पुरम्ऽध्याम् ॥
गमत् । वाजेभिः । आ । सः । नः ॥ ३ ॥

ञ्चिदुपदेशाल्लसार्वधातुकमनुदात्तमन्हिङ्वोः" इत्यनेन धातोरनुदात्तेत्त्वेन ततः परलसार्वधातुकत्वनिबन्धनेन शानचोऽनुदात्तत्वाद्धातुस्वरोऽनिवृत्तोऽवतिष्ठते। तस्मात्परयोरनुदात्तयोर्मध्ये आद्यस्योदात्तात्परत्वात्स्वरितः द्वितीयस्य च पदतावस्थायां स्वरितात्परत्वात्प्रचयः। संहितायां तु वार्याणां शब्दीय उदात्तः पर इति अनुदात्तः। वार्याणाम्। "वृङ् सम्भक्तौ" इति धातोः "ऋहलोर्ण्यत्" इतिण्यत् प्रत्ययः। प्रत्ययस्य णित्त्वादृकारस्य वृद्धौ रपरत्वे वार्यशब्दस्ततः षष्ठीबहुवचने आमि नुटि णत्वे वार्याणांशब्दः। तत्र धातोः स्वरस्य प्रत्ययस्वरेण सति शिष्टेन निवृत्तौ प्राप्तायां ततोऽपि विशिष्टत्वात्प्रत्ययगततित्त्वनिमित्तकेन "तित्स्वरितम्" इत्यनेन प्रत्ययसामान्यस्वरस्याद्युदात्तस्य बाधनेन तेन स्वरितेन धातुस्वरनिवृत्तौ प्राप्तायां तस्यापि स्वरितस्य बाधकेन "ईडवन्दवृशंसदुहां ण्यत" इत्यनेन ण्यदन्तस्यादेरुदात्तत्वविधानात्प्रकृते धातुस्वरोऽनुमन्यते इति सोऽनिवृत्तस्तिष्ठति। शेषनिघातेनान्त्यस्य निघाते तस्योदात्तात्परत्वात्स्वरितः। आमश्च सुप्त्वादनुदात्तत्वम्। तन्निमित्तकदीर्घस्यापि अनुदात्तस्थानिकत्वेन स्थानिवत्त्वादनुदात्तत्वमिति वार्याणांशब्दे आदिरुदात्तो द्वितीयोऽनुदात्तोऽप्युदात्तात्पर इति स्वरितत्वं गतस्तृतीयस्तु स्वरितात्परत्वात्प्रचितः। इन्द्रम्। इन्द्रशब्दो रन्नन्तत्वादाद्युदात्तो "ञ्नित्यादिः" इति सूत्रेण। सोमेशब्दोऽपि मन्नन्तत्वेन नित्त्वात्त्वादाद्युदात्तः। सचा। निपातत्वादाद्युदात्तः। सुते। क्तप्रत्ययस्वरेणान्तोदात्तः।

घशब्दोऽवधारणार्थो निपातः। सर्वैस्तच्छब्दैः संबध्यते। स घ=स एवेन्द्रः पूर्वमन्त्रोक्तगुणविशिष्टो नोऽस्माकं योगे=पूर्वमप्राप्तस्य पुरुषार्थस्य सम्बन्ध आभुवत्=आभवतु। पुरुषार्थं साधयत्वित्यर्थः। स एव राये धनार्थमाभुवत्=आभवतु। स एव पुरन्ध्याम्=योषित्याभुवत्। यद्वा। बहुविधायां बुद्धावाभुवत्। "पुरन्धिर्बहुधीः" (नि० ६।१३) इति यास्कः। स एव वाजेभिर्दैयैरन्नैः सह नोऽस्मानागमत्=आगच्छतु॥

घ। "चादयोऽनुदात्ता" (फि० ८४) इत्यनुदात्तः। संहितायाम् "ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्" (पा० ६।३।१३३) इति दीर्घः। योगे। घञो ञित्त्वादाद्युदात्तत्वम्। भुवत्। भूयात्। भवतेराशीर्लिङि परतो "लिङ्याशिष्यङ्" (पा० ३।१।८६) इत्यङ्प्रत्ययः। तस्य ङित्त्वेन गुणाभावादुवङादेशः। "क्ङिदाशिषि" (पा० ३।१।१०४) इति यासुण् न भवति। "अनित्यमागमशासनम्" इति वचनात्। "तिङ्ङतिङः" (पा० ८।१।२८) इति निघातः। "ऊडिदंपदाद्यप्पुम्रैद्युभ्यः" (पा० ६।१।१७१) इति राय इत्येतस्य विभक्तेरुदात्तत्वम्। पुरन्ध्याम्। पुरन्धिः। पुरुधीः। "पृषोदरादित्वात् (पा० ६।३।१०९) उकारस्यामादेश ईकारस्य ह्रस्वश्च। "आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम्" (पा० ६।२।९१।१) इत्याद्युदात्तत्वम्। अथवा पुरं शरीरं धीयतेऽस्यामिति "कर्मण्यधिकरणे च" (पा० ३।३।९३) इति किप्रत्ययः। अलुक् छान्दसः। "नब्विषयस्यानिसन्तस्य" इति पुरशब्द आद्युदात्तः। दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम्। गमत्। गमेर्लेटस्तिप्। "इतश्च लोपः परस्मैपदेषु" (पा० ३।४।९७ इतीकारलोपः। "बहुलं छन्दसि" (पा० २।४।७३) इति शपो लुक्। "लेटोऽडाटौ" (पा० ३।४।९४)इत्यडागमः। "आगमा अनुदात्ता" इति तस्यानुदात्तत्वे धातुस्वर एव शिष्यते। वाजेभिः। वृषादित्वादाद्युदात्तः* ॥ ३ ॥

* सः। "त्यजितनियजिभ्यो डिद्" इत्यौणादिकेन सूत्रेण "तनु विस्तारे" "इति धातोरदिः [illegible] डिद्भवति। डित्त्वाट्टिलोपे तदितिशब्दः। ततः प्रथमाया एकवचने सौ तस्मिन् परतस्त्यदाद्यत्वे पररूपत्वे "तदोः सःसावनन्त्ययोः" इति तकारस्य सकारे रुत्वविसर्गयोः स इति पदम्। तत्र तच्छब्दे "आद्युदात्तश्च" इति प्रत्ययाद्युदात्तस्वरे तच्छब्दोऽन्तोदात्तः। उणादीनामव्युत्पन्नत्वमते तु "फिषोऽन्त उदात्त" इत्यनेन प्रातिपदिकान्तोदात्तः। त्यदाद्यत्वस्य तु दकारस्थानिकतया व्यञ्जनस्थानिकत्वात् व्यञ्जनस्य व्यञ्जनमनुदात्तमित्यनुदात्तत्वोक्तेः स्थानिवद्भावेनाकारोऽनुदात्तः। तेन सह तच्छब्दीयतकाराकारस्य पररूपैकादेशे तस्यैकादेशस्य तशब्दीयोदात्ताकारत्यदाद्यत्वरूपानुदात्ताकाररूपोदात्तानुदात्तस्थानिकतया स्थानिवत्त्वेनोभयस्वरकत्वे प्राप्ते "एकादेश उदात्तेनोदात्त" इत्यनेन विशेषसूत्रेणोदात्तत्वम्। घ। निपातत्वेनाद्युदात्तत्वे प्राप्ते तदपवादेन "चादयोऽनुदात्ता" इत्यनेनानुदात्तः। तस्य स्थाने संहितायाम्"ऋचितुनुघ" इति जातस्य दीर्घस्यापि स्थानिवत्त्वेनानुदात्तत्वम्। तस्य

स्क०--घ इति पादपूरणः। स प्रकृत इन्द्रो नोऽस्माकं योगे। योग उद्योगः, उत्साहः, अलब्धलाभो वा तस्मिन्। आभुवत् आभिमुख्येन भवतु। योगमस्माकं करोत्वित्यर्थः। स एव राये धने स एव पुरन्ध्याम् बह्व्यां प्रज्ञायाम्। वाजेभिरागमत् आगच्छतु। वाजेभिः सहयोगलक्षणा तृतीया। अस्मभ्यं यानि दातव्यानि तैरन्नैः सह तानि गृहीत्वेत्यर्थः। अथवा हेतावियं तृतीया। प्रयोजनस्य च हेतुत्वेन विवक्षा। हविर्लक्षणैरन्नैर्हेतुभूतैः। हविरुपभोगार्थमित्यर्थः। कः? स एवेन्द्रः। कस्य वाजेभिः? नः, अस्मत्सम्बन्धिभिः॥ ३॥

---

पूर्ववर्त्तिमःशब्दीयोदात्तात्परत्वेन "उदात्तादनुदात्तस्य स्वरित" इति स्वरितः। नः। "अनुदात्तं सर्वमपादादौ"-इत्यधिकारे 'बहुवचनस्य वस्नसौ" इति सूत्रेण षष्ठीबहुवचनान्तस्यास्मच्छब्दस्य स्थानेऽनुदात्तनसादेशविधानादनुदात्तो नःशब्दाकारः। संहितायां योगशब्दीयो यकार. पर इति नसः सकारस्य रुत्वे उत्वे गुणे नो इति रूपम्। तत्र रुत्वस्थानिकस्योत्त्वस्य व्यञ्जनस्थानिकतया व्यञ्जनस्यानुदात्तत्वेन स्थानिवत्त्वेनानुदात्तत्वम्। गुणादेशस्त्वत्र नशब्दीयानुदात्तनकाराकाररूपस्थानिकानुदात्तोकाररूपानुदात्तद्वयस्थानिकत्वेन स्थानिवत्त्वेनानुदात्तः। स च संहितायां योगशब्दीययोकाररूपोदात्तः पर इति "उदात्तस्वरितपरस्य सन्नतर' इति सन्नतरः। अन्यथा पूर्ववर्त्तिस्वरितात्परत्वेन "स्वरितात्संहितायामनुदात्तानाम्' इति प्रचितोऽभविष्यत्। योगे। युजधातोर्घञि उपधागुणे जकारस्य कुत्वे योगेतिशब्दस्तस्मात्सप्तम्या एकवचने ङौ प्रत्यये गुणे योगे इति पदम्। तत्र युजधातो स्वरो घञ्प्रत्ययस्य "आद्युदात्तश्चेति 'सूत्रविधेयप्रत्ययसामान्यस्वरेण निवर्तनीयः परं तु अत्र प्रत्यये ञित्त्वकरणात्तन्निमित्तकस्वरेण प्रत्ययसामान्यस्वरस्यापवादात् अप्रवृत्तौ ञिन्निमित्तकेन "ञ्नित्यादिर्नित्यम्' इत्यनेन ञिदन्तस्यादेरुदात्तत्वविधानेन प्रकृते धातुस्वर एवानुमन्यते। तत्स्थानिकस्याकारस्य स्थानिवत्त्वेनोदात्तत्वमिति योगशब्द आद्युदात्त. शेषनिघातेनान्तानुदात्त.। सप्तम्येकवचनस्य ङे. सुप्त्वेनानुदात्तत्वात् तेन सह पूर्वाकारस्य गुणरूपैकादेशोऽनुदात्तद्वयस्थानिक इति स्थानिवत्त्वादनुदात्त.। तस्य पदतादशायामुदात्तात्परत्वात्स्वरितत्वम्। संहितायां तु आकारपरत्वादेकारस्यायादेशे यकारलोपः। तदानीमेकारस्यानुदात्तत्वेन तत्स्थानिकस्यायादेशाकारस्य स्थानिवत्त्वेनानुदात्तत्वम्। तस्य पूर्ववर्त्त्युदात्तात्परत्वेऽपि परस्तादाकार उदात्त. पर इति "उदात्तस्वरितपरस्य सन्नतर' इति सन्नतरत्वविधानान्न स्वरितः। आ। निपातत्वादाद्युदात्त.। भुवत्। "भू सत्तायाम्" इति धातोराशीर्लिङि 'लिङ्याशिष्यङ्' इत्यङ्प्रत्यये लिङः प्रथमपुरुषस्यैकवचने तिप्प्रत्यये तस्येकारस्य 'इतश्च" इति लोपे अङो ङित्त्वात्पूर्वस्य गुणाभावे 'अचि श्नुधातुभ्रुवाम्" इत्युवङि "आगमशास्त्रमनित्यम्" इति यासुटोऽप्रवृत्तौ भुवदिति रूपम्। तत्र धातोः स्वरस्याङ्प्रत्ययस्वरेण निवृत्तौ अन्तोदात्तत्वे प्राप्ते प्रकृते एतस्यातिङन्तपदात्परत्वात "तिङ्ङतिङ' इति सर्वानुदात्तत्वम्। तेन भुवदिति पदे स्वरत्रयमप्यनुदात्तम्। संहिताया तत्राद्यस्योदात्तात्परत्वात्स्वरितो द्वितीयस्य स्वरितात्परत्वेऽपि न प्रचयः किंतु अनुदात्तापरपर्यायः सन्नतर उदात्तपरत्वात्। सः। अस्य स्वरः पूर्वोक्तवदन्तोदात्तः। राये। 'रा दाने" इति धातो "रातेर्डैः" इत्यौणादिकेन डैप्रत्यये डित्त्वाट्टेर्लोपे रैशब्द.। तस्माच्चतुर्थ्येकवचने ङेप्रत्यये तन्निमित्तक आयादेशे राये इति पदम्। तत्र धातोः स्वरस्य डित्त्वनिमित्तकटेर्लोपेनापहाराद्रैशब्दे प्रत्ययस्वरः। ततोऽन्तोदात्तो रैशब्दः। चतुर्थ्येकवचनस्य सुप्त्वेन "अनुदात्तौ सुप्पितौ" इतिविशेषविहितेनानुदात्तेन प्रत्ययसामान्यस्वर "आद्युदात्तश्च" इति न प्रवर्तते। अनुदात्तस्याप्यपवादेन प्रकृते "ऊडिदंपदाद्यप्पुम्रैद्युभ्यः" इत्यनेनैभ्यः परस्या असर्वनामस्थानविभक्तेरुदात्तत्वविधानान्ङे प्रत्ययस्योदात्तत्वम्। शेषनिघातेन प्रातिपदिकान्तस्यानुदात्तत्वे तत्स्थानिका-

वे०—स एवास्माकमप्राप्तप्राप्त्यर्थं योगमावहतु, स धनाय स पुरन्धिर्बहुधीर्योषा तस्यै चाश्वैश्चास्मानागच्छतु सः ॥ ३ ॥

यादेशस्याप्यनुदात्तत्वं स्थानिवत्त्वात्। एवं च रायेशब्दे आदिरनुदात्तोऽन्त उदात्तः। सः। अस्य पूर्ववदुदात्तः स्वरः। पुरन्ध्याम्। 'पॄ पालनपूरणयोः" इत्यस्माद्धातोर्मूलविभुजादित्वात्कप्रत्यये कित्त्वाद्गुणाभावे "उदोष्ठ्यपूर्वस्य" इत्युत्वे रपरत्वे पुरशब्दः, तदुपपदाद्धाधातोः "कर्मण्यधिकरणे च" इति किप्रत्यये धातोराकारलोपे विभक्तेश्छान्दसत्वादलुकि पुरन्धिशब्दः। 'पॄ पालनपूरणयोः" इत्यस्मात् "पॄभिदिव्यधिगृधिधृषिभ्य" इत्यौणादिकेन सूत्रेण कुप्रत्यये कित्त्वाद्गुणाभावे "उदोष्ठ्य" इतिसूत्रेण उत्वे रपरत्वे पुरुशब्दः। "ध्यै चिन्तायाम् इतिधातोः 'ध्यायतेः सम्प्रसारणम्" इत्यनेन क्विपि सम्प्रसारणे दीर्घे च धीशब्दः। ततः पुरु + धीशब्दयोर्बहुव्रीहौ पुरुधिः। तस्य पृषोदरादित्वाद्रुशब्दस्य रादेशो नुम् चेति पुरन्धिशब्दः। बहुकर्मा बहुप्रज्ञो वेत्यर्थः। अथवा पॄधातुनः कप्रत्ययान्ततया निष्पन्नपुरशब्दोपपदे 'दृ विदारणे' इत्यस्माद्धातोर्वेञो डिच्चेति डित इन्प्रत्ययस्य बाहुलकात्प्रवृत्तौ दकारस्य धकारादेशे नकारोपजने च पुरन्धिशब्द इति देवराजयज्वसम्मता व्युत्पत्तिः। तस्मात्पुरन्धिशब्दात्सप्तम्येकवचने ङिप्रत्यये तन्निमित्तिकायां पूर्वस्य 'ङिति ह्रस्वश्च" इति नदीसञ्ज्ञायां 'ङेराम्नद्याम्" इति आमि यणि पुरन्ध्यांशब्दः। तत्र धातोः स्वरस्य कप्रत्ययस्वरेणापहारे पुरशब्दोऽन्तोदात्तः प्राप्तः परन्तु "नब्विषयस्यानसन्तस्य' इति फिट्सूत्रेणाद्युदात्तः शेषनिघातेनान्तानुदात्तः। धिशब्दे च धातोरन्त्यस्य प्रत्ययेनापहारात्प्रत्ययस्वरेणान्तोदात्तता। समासे दासीभारादित्वात्पूर्वपदाद्युदात्तत्वे शेषनिघातेनावशिष्टानुदात्तत्वे पुरन्धिशब्द आद्युदात्तः। पुरशब्दत. पुरन्धिशब्दनिष्पत्तिकल्पेच पॄधातुस्वरस्य कुप्रत्ययस्वरेण निवृत्त्या पुरुशब्दोऽन्तोदात्त। धीशब्दस्य स्वर. पूर्ववत्। ततस्तयो. पुरु + धीशब्दयोः समासे दिवोदासादित्वादाद्युदात्तत्वमिति पुरन्धिशब्द आद्युदात्त.। दृधातुतो धिशब्दनिष्पत्तिकल्पे च धिशब्दे प्रत्ययस्वर एवावशिष्टं तु उपर्युक्तवत्। ततः सप्तम्येकवचनस्य सुप्त्वेन "अनुदात्तौ सुप्पितौ" इत्यनुदात्तत्वेन तत्स्थानिकामादेशस्यापि स्थानिवत्त्वेनानुदात्तत्वे पुरन्ध्यांपदमाद्युदात्तमेवावतिष्ठते। तत्रानुदात्तयोर्द्वितीयतृतीययोरचोर्मध्ये प्रथमस्योदात्तात्परत्वाद् 'उदात्तादनुदात्तस्य स्वरित इति स्वरितो द्वितीयस्य तु स्वरितात्परत्वात्प्रचयः। गमत्। गमधातोर्लेट् तत्स्थाने प्रथमपुरुषैकवचने तिपि "इतश्च" तीकारलोपे मध्ये शपि "बहुलं छन्दसी" ति तल्लुकि 'लेटोऽडाटावि"त्यडागमे गमदिति रूपम्। तत्र 'धातोरि"त्यन्त उदात्तो धातोः। प्रत्ययस्य पित्त्वेनाडागमस्यागमत्वेन 'आगमा अनुदात्ता इत्यनेनानुदात्तत्वे आद्युदात्तं गमदिति पदम्। शेषनिघातेन वा पूर्वोक्तरीत्याऽनुदात्तस्य द्वितीयस्य स्वरस्य पदतादशायामुदात्तात्परत्वाद् "उदात्तादनुदात्तस्ये"तिस्वरितः। संहितायां तु वाजशब्दीयोदात्तः पर इति "उदात्तस्वरितपरस्य सन्नतर" इत्यनेनानुदात्तः। वाजेभिः। "वज गतौ" इत्यस्माद्धातोः अकर्तरि च कारके सञ्ज्ञायाम्" इति घञ्प्रत्यये वाजशब्दः। "अजिव्रज्योश्चे"ति चकारस्यास्यानुक्तसमुच्चयार्थत्वेन वजेरपि कुत्वनिषेधे वाजशब्दः सिद्ध्यतीति न्यासकारः। एवं च वाजशब्दे "धातोः' इतिधात्वन्तस्योदात्तत्वमित्युदात्तस्वरः प्रत्ययसम्बन्धिना आद्युदात्तस्वरेण सतिशिष्टेन निवर्त्तनीयः, परन्तु अत्र प्रत्ययगतेन ञित्त्वेन तन्निमित्तकेन "ञ्नित्यादिर्नित्यम्" इति ञित्स्वरेण प्रत्ययसामान्यस्वरस्य बाधनाद्घञन्तवाजशब्दस्याद्युदात्तत्वविधानेन धातुस्वर एवानुमन्यते इति आद्युदात्तो वाजशब्दः शेषनिघातेनान्तानुदात्तः। यदितु "कर्षात्वतो घञोऽन्त उदात्त" इत्यनेनान्तोदात्तत्वं घञन्तस्य प्रकृते इति विभाव्यते तदा वृषादित्वाद्वाजशब्दस्याद्युदात्तता विज्ञेया। तस्माद्भिसि प्रत्यये बाहुलकात्तस्यैसादेशाभावे भिस्निमित्तके पूर्वस्याकारस्यैत्वे वाजेभिरिति

चतुर्थीमृचमाह :—

यस्य संस्थे न वृण्वते हरी समत्सु शत्रवः ॥

तस्मा इन्द्राय गायत ॥ ४ ॥

यस्य । संस्थे । न । वृण्वते । हरी इति । समत्ऽसु । शत्रवः ॥

तस्मै । इन्द्राय । गायत ॥ ४ ॥

समत्सु - युद्धेषु यस्येन्द्रस्य संस्थे - रथे युक्तौ हरी = द्वावश्वौ शत्रवो न वृण्वते = न संभजन्ते। रथमश्वौ च दृष्ट्वा पलायन्त इत्यर्थः। तस्मा इन्द्राय तत्सन्तोषार्थं हे ऋत्विजो गायत - स्तुतिं कुरुत ॥

"रण" इत्यादिषु षट्चत्वारिंशत्सु संग्रामनामसु "समत्सु समरणे" (निघ० २।१६) इति पठितम्। संस्थे। सम्यक् तिष्ठतीति संस्थो रथः। "आतश्चोपसर्गे" (पा० ३।१।१३६) इति कप्रत्ययः। कृदुत्तरपदप्रकृतिस्वरत्वम्। वृण्वते। प्रत्ययस्वरेणाकार उदात्तः। "सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः (पा० ६।१।१५८।१) । "तिङ्ङतिङः" (पा० इति निघातो न भवति "यद्वृत्तान्नित्यम्" (पा० ८।१।६६) इति प्रतिषेधात्। पञ्चमीनिर्देशेऽप्यत्र व्यवहितेऽपि कार्यमिष्यते। हरतो रथमिति हरी अश्वौ। इन्नित्यनुवृत्तौ "हृपिषिरुहिवृतिविदिच्छिदिकीर्तिभ्यश्च" (उ० ४।१२०) इतीन्प्रत्ययः। नित्त्वादाद्युदात्तत्वम्। समत्सु। संपूर्वादत्तेः क्विप्। शत्रवः। शतिः सौत्रो धातुर्हिंसार्थः। "रुशतिभ्यां क्रुन्" (उ० ४।१०६)

पदम्। तत्र भिस् प्रत्ययस्य सुप्त्वनिमित्तकेन विशिष्टेन "अनुदात्तौ सुप्पितौ" इत्यनेन प्रत्ययसामान्यस्वरस्यापवादनादनुदात्तत्वम्। तन्निमित्तकस्यैत्वस्यानुदात्तजकाराकारस्थानिकत्वेन स्थानिवत्त्वादनुदात्तत्वमिति वाजेभिःशब्दे आदिरुदात्तो द्वितीयोऽनुदात्तः सन् स्वरितः, उदात्तात्परत्वाद् "उदात्तादनुदात्तस्य स्वरित" इत्यनेन। तृतीयस्तु पदपाठेऽनुदात्तः सन् प्रचितः स्वरितात्परत्वात् "स्वरितात्परेषामनुदात्तानाम्" इत्यनेन। संहितायां तु आकार उदात्तः पर इति "उदात्तस्वरितपरस्य सन्नतर" इत्यनेन सन्नतरापरपर्यायानुदात्तः। आ। निपातत्वादाद्युदात्तः। सः। पूर्ववदुदात्तः। नः। "अनुदात्तं सर्वमपादादावि"त्यधिकारस्थेन "बहुवचनस्य वस्नसावि"त्यनेन द्वितीयाबहुवचनान्तास्मच्छब्दस्थानेऽनुदात्तनसादेशविधानादनुदात्तत्वम्। तस्य संहितायां पूर्ववदुदात्तात्परत्वमिति "उदात्तादनुदात्तस्य स्वरित" इति स्वरितः।

निंत्त्वादाद्युदात्तत्वम्। तस्मै। "सावेकाच" (पा० ६।१।७८२) इति विभक्तुदात्तस्य "न गोश्वन्सावर्ण" (पा० ६।१।१६९) इति प्रतिषेधात्प्रातिपदिकस्वर एव* ॥ ४ ॥

यस्य संस्थे।

* यस्य। "यज देवपूजासङ्गतिकरणमित्रकरणदानेषु" इति धातोः "त्यजितनियजिभ्यो डिदि"त्यौणादिकेन सूत्रेणादिप्रत्ययः स च डित्। डित्त्वाट्टेर्लोपे यदिति प्रातिपदिकम्। तस्मात्षष्ठ्येकवचने ङस्प्रत्यये "त्यदादीनाम" इति दकारस्याकारे"ऽतो गुण" इति पररूपे "टाङसी"ति ङसः स्यादेशे यस्येति पदम्। तत्र यदित्यत्र अदेः प्रत्ययस्य "आद्युदात्तश्चे"ति आद्युदात्तः स्वरस्तेन यच्छब्दोऽन्तोदात्तः। उणादिनामव्युत्पन्नत्वमते तु "फिषो ऽन्त उदात्त" इति अन्तस्योदात्तत्वम्। "स्वरविधौ व्यञ्जनमविद्यमानवदि"ति दकारस्याविद्यमानत्वेनाकारस्य प्रातिपदिकान्तत्वम् तस्योदात्तत्वेन प्रातिपदिकान्तोदात्तत्वमिति व्यवहारः। त्यदाद्यत्वस्य दकाररूपव्यञ्जन-स्थानिकत्वेन स्थानिवत्त्वेनानुदात्तत्वम् व्यञ्जनमनुदात्तमिति व्यञ्जनस्यानुदात्तताशिष्टेः। दकारस्थानिकाकारस्य पूर्ववर्तियकाराकारेण पररूपे पररूपनिष्पन्नस्याकारस्योदात्तयशब्दाकारानुदात्तदकारस्थानिकाकारोभयस्थानिक-त्वेन "एकादेश उदात्तेनोदात्त" इत्युदात्तत्वम्। ङसश्च प्रत्ययस्य सुप्त्वेन"अनुदात्तौ सुप्पितावि"त्यनुदात्तत्वेन तत्स्थानिकस्यादेशस्यापि स्थानिवत्त्वेनानुदात्तत्वम्। तस्य पूर्ववर्त्युदात्तयकाराकारात्परत्वेन"उदात्तादनुदात्तस्ये"ति स्वरितः। संस्थे। समुपसर्गात् "ष्ठा गतिनिवृत्तौ"इति धातोः "आतश्चोपसर्ग" इति कप्रत्यये "आतो लोप इटि चे"ति धात्वाकारस्य लोपे संस्थशब्दः। तस्मात्सप्तम्येकवचने ङौ पूर्वेण गुणैकादेशे संस्थे इति पदम्। तत्र प्रत्ययस्वरेण स्थशब्दोऽन्तोदात्तः। समः उपसर्गत्वा'दुपसर्गाश्चाभिवर्जमि"त्युदात्तत्वम्। समासे कृदुत्तरपद-प्रकृतिस्वरत्वम्। एवं च शेषनिघातेनाद्यस्यानुदात्तत्वे संस्थशब्देऽन्तोदात्तत्वम्। ङेः प्रत्ययस्य सुप्त्वादनु-दात्तत्वेऽपि स्थशब्दाकारेणोदात्तेन सहैकादेशादेकादेशनिष्पन्नस्य गुणैकारस्यापि "एकादेश उदात्तेनोदात्त" इत्युदात्त इति संस्थशब्देऽन्त्यस्योदात्तता। न। निपातत्वादाद्युदात्तः। वृण्वते। "वृञ् वरण" इति सुनोत्यादिकाद्धातोर्वर्तमाने लटि प्रथमपुरुषबहुवचने आत्मनेपदे झे मध्ये श्नौ विकरणे "आत्मनेपदेष्वन-त" इत्यनेन झप्रत्ययस्य झकारस्य स्थानेऽदादेशे यणि वृण्वत इति रूपम्। तत्र "धातोरि"त्यनेन धातोरन्त उदात्तः, झस्यापि प्रत्ययस्य "आद्युदात्तश्चे"त्यनेनादिरुदात्तः। स च झकारस्यादेशोत्तरं प्रवर्तते इति अतेन्यस्य प्रथम अकार उदात्तः। श्नोर्विकरणस्यापि प्रत्ययत्वेन "आद्युदात्तश्चे"त्युकार उदात्त इति त्रयाणामप्युदात्तानां प्राप्तौ सतिशिष्टत्वाद्बलीयस्त्वाज्झप्रत्ययस्यैव स्वरोऽवतिष्ठतेऽन्ययोस्तु शेषनिघातेनानुदात्तत्वम्। न च सर्वतृष्णतः श्नुप्रत्ययस्य प्रवृत्त्या सतिशिष्टत्वेन तदीयस्वरेणैव स्थातुमुचितम्। श्नोर्विकरणत्वाद्विकरणानां स्वरस्य सति शिष्टत्वेन बलीयस्त्वाभावस्य "सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य" इति वार्तिकेन बोधनात्। तथा च धातोर्ऋकारो विकरणस्योकार इति द्वयमनुदात्तं तत्र विकरणस्वरस्य परवर्ति झप्रत्ययझकारस्थानिकादकार-परत्वेन यणादेशे धातोर्ऋकारोऽनुदात्तः प्रथमो द्वितीयो वकारोत्तरवर्ती झप्रत्ययाकार उदात्त स्तृतीयस्तकारोत्तरवर्त्ये-कारोऽनुदात्तः। तत्र झप्रत्ययीयाद्याकारस्योदात्तत्वेनान्त्यस्य शेषनिघातेनानुदात्तत्वे तत्स्थानिकस्य "टित आत्मने-पदानां टेरे" इत्येकारस्य स्थानिवत्त्वेनानुदात्तत्वम्। एवं सति मध्योदात्तं वृण्वत इति पदम्। तत्रान्त्यस्यै-कारस्य पददशायामुदात्तात्परत्वात्स्वरितः, संहितादशायां तु हरीशब्दावयवोदात्तः पर इति "उदात्तस्वरित-परस्य सन्नतर" इत्यनुदात्तत्वमेव। अत्र अस्य शब्दस्य तिङन्तत्वेनातिङन्तपदात्परत्वेन "तिङ्ङतिङ" इति सर्वनिघातशङ्का न कार्या। सर्वनिघातापवादेन "यद्वृत्तान्नित्यमि"त्यनेन यच्छब्दजन्यरूपयोगे निघातप्रतिषेधात्।

स्क०—यस्येन्द्रस्य स्वभृते संस्थे। अपठितमपि सङ्ग्रामनामैतत्। सङ्ग्रामे न वृण्वते। वृणोतिरत्र सामर्थ्यात्प्राप्त्यर्थः। प्राप्नुवन्ति हरी अश्वौ। समत्सु। संस्थे इत्यनेन गतत्वात्क्रियाशब्दोऽयं न सङ्ग्रामनाम। अद् भक्षणे। सम्भक्षयत्सु परस्परं योद्धृषु। महति युध्दे प्रवृत्ते इत्यर्थः। शत्रवो वैरिणः। यः सङ्ग्रामे महति युध्दे प्रवृत्ते दूरस्थानेव शत्रून निहन्ति इत्यर्थः। तस्मा इन्द्राय सामान्युच्चारयत वा स्तुतीः ॥ ४ ॥

वें० यस्य संस्थे यस्मिन्नवस्थिते न वारयन्ति तस्य स्वभूतावश्वौ संग्रामेषु शत्रवस्तस्मा इन्द्राय गायत ॥ ४ ॥

"यद्वृत्तादि"ति सूत्रे पञ्चमीनिर्देशेन "तस्मादित्युत्तरस्यैव" तिङन्तस्य निघात इति यद्यपि प्राप्त तेन वृण्वत इति तिङन्तस्य यच्छब्दीययस्येतिरूपादव्यवहितोत्तरत्वाभावेन निघातो निराबाधस्तथापि छन्दसि दृष्टानुविधानाद्व्यवहितेऽपि उक्तसूत्रप्रवृत्त्या निघातनिषेध इति मध्योदात्तत्वमेवावतिष्ठत इति ज्ञेयम्। हरी। "हृञ् हरणे" इति धातोः 'हृपिषिरुहिवृतिविदिच्छिदिकीर्तिभ्यश्चे'त्यौणादिकेन सूत्रेणेन्प्रत्यये ऋकारस्य गुणे रपरत्वे हरिशब्दः। ततो द्वितीयाद्विवचने औकारे "प्रथमयोः पूर्वसवर्णः" इत्यनेन पूर्वसवर्णदीर्घ एकादेशे हरी इति पदम्। तत्र धातोः स्वर इन्प्रत्ययस्य प्रत्ययसामान्यस्वरेण "आद्युदात्तश्चे"ति सूत्रविहितेन निवर्तनीयः परन्त्वत्रेनि प्रत्यये विद्यमाननित्त्वेन प्रत्ययसामान्यस्वरस्यापवादञ्नित्यादिरित्यनेन निदन्तादिरूपो धातुस्वर उदात्तत्वेनानुमन्यते। तत्स्थानिकस्य गुणाकारस्य स्थानिवत्त्वेनोदात्तत्वम्। द्वितीयाद्विवचनौकारस्य तु सुप्त्वेनानुदात्तत्वाद् तेन सह हरिशब्दावयवान्त्येकारस्य सवर्णदीर्घरूपदीर्घेकारादेशस्य अनुदात्तद्वयस्थानिकत्वेन स्थानिवत्त्वेनानुदात्तत्वम्। तस्य हकाराकारादुदात्तात्परत्वेन "उदात्तादनुदात्तस्य स्वरित" इत्यनेन स्वरितत्वम् संहितायाम्। पदपाठे तु हरीशब्दस्य द्विवचनान्तत्वेन दीर्घोकारान्तत्वेन प्रगृह्यत्वात्तत ऊर्ध्वं प्रगृह्यत्वज्ञापनायेतिशब्दयोगः। स चेतिशब्दो निपातत्वादाद्युदात्त इति तदीयोदात्तेकारस्य परत्वेन हरीशब्दीयान्त्योऽनुदात्त "उदात्तस्वरितपरस्य सन्नतर" इत्यनेनानुदात्तापरपर्यायसन्नतररूपोऽवतिष्ठते। समत्सु। संपूर्वात् "अद भक्षणे" इत्यस्माद्धातोः क्विपि समच्छब्दस्तस्मात्सप्तमीबहुवचने सुप्रत्यये समत्सु इति पदम्। देवराजयज्वा तु संपूर्वादत्तेः, सपूर्वान्मदी हर्ष इत्यस्माच्च क्विपि समच्छब्दस्य सिद्धिमाह। समो मलोपस्तु छान्दसः। तत्र समदन्ति सम्भक्षयन्ति योद्धृणामायूंषि, संमाद्यन्ति सहृष्यन्ति सुभटा यत्रेत्यर्थः। आद्ये कल्पे कर्तरि प्रत्ययः, अन्त्ये अधिकरणे इति विशेषः। तत्र सम उपसर्गत्वा"दुपसर्गाश्चाभिवर्जमि"ति आद्युदात्तत्वम् धातोरपि "धातोरि"त्यनेनान्त उदात्तः। समासे "गतिकारकोपपदात्कृदि"त्यनेनोत्तरपदप्रकृतिस्वरकत्वविधानाद्धातुस्वरोऽवशिष्यते उपसर्गस्य तु शेषनिघातेनानुदात्तत्वम्। सुपः सप्तमीबहुवचनस्य सुप्त्वेनानुदात्तत्वम्। तस्योदात्तात्परत्वा"दुदात्तादनुदात्तस्ये"ति स्वरितः पदपाठे। संहितायां तु शत्रुशब्दावयव उदात्तः पर इति 'उदात्तस्वरितपरस्य सन्नतर" इति सन्नतरः। शत्रवः। शति' सौत्रो धातुः। तस्माद् "रुशातिभ्यां क्रुन्नि"त्यौणादिकेन सूत्रेण क्रुनि प्रत्यये शत्रुशब्दः। तस्मात्प्रथमाबहुवचने जसि प्रत्यये तन्निमित्तके उकारगुणेऽवादेशे शत्रव इति पदम्। ततश्च "धातोरि"ति धात्वन्त उदात्तः, "आद्युदात्तश्चे"ति प्रत्ययाद्युदात्त इति प्राप्तम् परतु प्रत्ययस्य नित्करणेन "आद्युदात्तश्चे'त्यस्यापवादादत्र "ञ्नित्यादिर्नित्यमि"ति निदन्तस्यादिरुदात्तस्तेन शत्रुशब्द आद्युदात्तः शेषनिघातेनान्तानुदात्तः। जसोऽनुदात्तत्वं सुप्त्वात्। तस्मिन् परतो गुणादेशौकारस्यानुदात्तशत्रुशब्दावयवोकारस्थानिकतया स्थानिवत्त्वे-

पञ्चमीमृचमाह :—

सुतपाव्ने सुता इमे शुचयो यन्ति वीतये ॥
सोमासो दध्याशिरः ॥ ५ ॥

सुतऽपाव्ने । सुताः । इमे । शुचयः । यन्ति । वीतये ।
सोमासः । दधिऽआशिरः ॥ ५ ॥

इमे सोमासोऽस्मिन्कर्मणि संपादिताः सोमाः सुतपाव्ने – अभिषुतस्य सोमस्य पानकर्त्रे। षष्ठ्यर्थे चतुर्थी। तस्य पातुर्वीतये – भक्षणार्थं यन्ति। तमेव प्राप्नुवन्ति। कीदृशाः सोमाः? सुताः = अभिषुताः। शुचयः – दशापवित्रेण शोधितत्वाच्छुद्धाः। दध्याशिरः। अवनीयमानं दध्याशीर्दोषघातकं येषां सोमानां ते दध्याशिरः ॥

सुतपाव्ने। सुतं पिबतीति सुतपावा। वनिपः पित्त्वाद्धातुस्वर एव शिष्यते। समासे द्वितीयापूर्वपदप्रकृतिस्वरं बाधित्वा कृदुत्तरपदप्रकृतिस्वरत्वम्। शुचयः। "शुच

नानुदात्तत्वम्। तत्स्थानिकावादेशस्यापि तथैव स्थानिवत्त्वेनानुदात्तत्वमिति शत्रवःशब्दे आदिरुदात्तो द्वितीय-तृतीयावचावनुदात्तौ। तत्रापि द्वितीयस्य प्रथमादुदात्तात्परत्वात्स्वरितत्वम्। तृतीयस्य तु स्वरितात्परत्वात्प्रचयः। तस्मै। "तनु विस्तारे" इत्यस्मा"त्यजितनियजिभ्यो डिदि"त्यौणादिकसूत्रेणादिप्रत्ययो डित्। डित्त्वाट्टेर्लोपः। ततश्चतुर्थ्या एकवचने ङे प्रत्यये "त्यदादीनाम" इति दकारस्याकारो 'ऽतो गुणे" इति पररूपे "सर्वनाम्नः स्मा' इति स्मायादेशे तस्मा इति पदम्। तत्र प्रत्ययस्वरेण तच्छब्दोऽन्तोदात्तः। उणादीनामव्युत्पन्नत्वपक्षेतु "फिषोऽन्त उदात्त" इत्यन्तोदात्तत्वम्। ङेप्रत्ययस्य सुप्त्वा 'दनुदात्तौ सुप्पिताचि'त्यनुदात्तत्वं तत्स्थानिकस्माया-देशस्य स्थानिवत्त्वेनानुदात्तता। त्यदाद्यत्वस्य व्यञ्जनस्थानिकत्वादनुदात्तत्वम्। पररूपादेशस्य तु उदात्तानुदात्तो-भयस्थानिकत्वेनोदात्तत्वम् इति तस्मै शब्दोऽन्तानुदात्तः। तस्यान्तस्यानुदात्तस्य पदपाठे उदात्तात्पर-त्वात्स्वरितः। संहितायां तु इन्द्रायशब्दीय उदात्त इकारः पर इति वार्णसन्धिना ऐकार-स्यायादेशे तस्यानुदात्तस्थानिकत्वेनानुदात्तत्वादुदात्तेकारपरत्वाच्च "उदात्तस्वरितपरस्य सन्नतर' इति सन्नतरः। इन्द्राय। "इदि परमैश्वर्ये इति धातो "ऋज्रेन्द्रे"त्यादिनौणादिकेन सूत्रेण रनि प्रत्यये निदन्तत्वा 'ञ्नित्यादिर्नित्य-मि'तीन्द्रशब्द आद्युदात्तः। तस्माच्चतुर्थ्येकवचनङेप्रत्यये तस्य यादेशे तस्मिन्परत इन्द्रशब्दीयाकारस्य दीर्घत्वे इन्द्रायेति पदम्। तत्र सुप्त्वान्ङेप्रत्ययस्य स्थानिवत्त्वेन यादेशस्यानुदात्तत्वम्। न्द्राकारस्य दीर्घस्यापि स्थानिवत्त्वेनैवानुदात्तत्वम्। तथा चेन्द्रशब्दीयः प्रथम उदात्तो द्वितीयोऽप्युदात्तात्परत्वात्स्वरितः, तृतीयस्तु स्वरि-तात्परत्वात्प्रचितः। गायत। "गै शब्दे' इति धातोर्लोटि मध्यमपुरुषबहुवचने थप्रत्यये तस्य तादेशे मध्ये शपि आयादेशे गायतेति रूपम्। तत्र शपः पित्त्वात्तप्रत्ययस्य तु "तास्यनुदात्तेन्ङिदुपदेशाल्लसार्वधातुकमनुदात्तमि"त्य-नेन लसार्वधातुकत्वादनुदात्तत्वमिति धातुस्वरावशेषे प्राप्ते प्रकृते "तिङ्ङतिङ" इत्यनेन सर्वानुदात्तत्वम्। तस्यच स्वरितात् परत्वात्प्रचयः संहितायाम्। पदपाठे त्वनुदात्तत्वम्।

दीप्तौ" इन्नित्यनुवृत्तौ "इगुपधात्कित्" (उ० ४।१२१) इतीनः कित्त्वाल्लघूपधगुणाभावः। नित्त्वादाद्युदात्तत्वम्। वीतये। "वी गतिप्रजननकान्त्यसनखादनेषु" इत्यस्माद् "मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः" (पा० ३।३।९६) इति क्तिन्नुदात्तः। सोमासः। "षुञ् अभिषवे"। "अर्तिस्तुसुहुसृधृक्षि" इत्यादिना (उ० १।१३८) मन। नित्त्वादाद्युदात्तः। "आज्जसेरसुक्" (पा० ७।१।५०) इत्यसुगागमः। दध्याशिरः। दधाति पुष्णातीति दधि। "डुधाञ् धारणपोषणयोः"। "आदृगमहनजनः किकिनौ लिट् च" (पा० ३।२।१७१) इति किन। लिड्वद्भावाद्द्विर्भावः। कित्त्वादाकारलोपः। नित्त्वादाद्युदात्तत्वम्। "शॄ हिंसायाम्"। शृणाति हिनस्ति सोमेऽवनीयमानं सत्सोमस्य स्वाभाविकं रसमृजीषत्व-प्रयुक्तं नीरसं दोषं वेत्याशीः। क्विपि "ऋत इद्धातोः" (पा० ७।१।१००) इतीत्वम्, रपरत्वं च। दध्येवाशीर्येषां सोमानां ते दध्याशिरः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्* ॥ ५ ॥ ॥ ९ ॥

॥ इति प्रथमस्य प्रथमे नवमो वर्गः ॥

सुतपाव्ने

* सुतपाव्ने। सुधातोः क्ते प्रत्यये सुतशब्दः प्रत्ययस्वरेणान्तोदात्तः। तदुपपदात्पा पाने इत्यस्माद्धातो- 'रातो मनिन्क्वनिब्वनिपश्चे''त्यनेन वनिप् प्रत्ययः। तस्य पित्त्वेनानुदात्तत्वात्पावन् शब्दे धातुस्वरोऽवशिष्यते तेन पावशब्द आद्युदात्त। ततस्सुतपावशब्दयोः समासे "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्या" इत्यनेन द्वितीयान्तपूर्वपदस्य प्रकृतिस्वरत्वे प्राप्ते तं बाधित्वा "गतिकारकोपपदात्कृदि''त्यनेन कृदन्तोत्तरपदस्य प्रकृतिस्वरकत्वविधानात्पावशब्दस्वरः समासेऽपीति सुतपावशब्दस्तृतीयोदात्तः। ततश्चतुर्थ्येकवचनङेप्रत्यये तन्निमित्तके अनोऽकारलोपे सुतपाव्ने इति पदम्। तत्र ङेप्रत्ययस्य सुप्त्वेनानुदात्तत्व तस्य वकारोत्तरवर्त्त्य-कारलोपे उदात्तपाशब्दीयाकारात्परत्वात्स्वरित "उदात्तादनुदात्तस्ये''त्यनेन। आद्यौ द्वावचौ तु अनुदात्तौ। सुताः। 'षुञ् अभिषवे'' इति धातोर्भूते निष्ठाक्ते प्रत्यये इडागमनिषेधे सुतशब्दस्तत्र प्रत्ययस्वरेणान्तोदात्तत्वम्। आदेश्च शेषनिघातेनानुदात्तत्वम्। ततः प्रथमाबहुवचने जसि पूर्वसवर्णदीर्घे रुत्वविसर्गयोः सुता इति पदम्। तत्र जसः सुप्त्वादनुदात्तता। तेन सह तशब्दाकारस्य सवर्णदीर्घैकादेशे तशब्दाकारस्योदात्तत्वेन "एकादेश उदा-त्तेनोदात्त'' इत्येकादेश उदात्त इति सुताःशब्दोऽन्तोदात्तः। इमे। 'इदि परमैश्वर्ये'' इति धातोरौणादिकेन "इन्देः कमिर्नलोपश्च'' इति सूत्रेण कमिप्रत्ययो नलोपश्च धातोरिति इदंशब्दः। उज्ज्वलदत्तस्तु औणादिकं सूत्रम् "इन्देः कमिन्नलोपश्च'' इति प्रपठ्य कमिं प्रत्ययं नितमाह। दशपादीकारस्तु 'इणो दमक्' इति वदन् "इण् गता''विति धातोर्दमकं प्रत्ययमाह। भोजदेवेन इणो दमुगुच्यते, अथवा इन्धेः कमिन् बाहुलकाद्दकारो धकारस्य नकारस्य लोपश्चेति देवराजयज्वा। तत्र कमिप्रत्ययकल्पे दमक्दमुक्कल्पयोश्च "धातोरि'ति धातुस्वरस्य सति शिष्टेन प्रत्ययस्य "आद्युदात्तश्च'' इति स्वरेण बलीयसा निवर्तनादिदंशब्दोऽन्तोदात्तः। कमिन् पक्षे तु प्रत्ययसामान्यस्वरम् ''आद्युदात्तश्चे''ति प्राप्तं प्रत्ययगतनित्त्वनिमित्तको "ञ्नित्यादिर्नित्यम्'' इति स्वरः सतिशिष्टत्वाद्बाधमान इदंशब्दमाद्युदात्तमापादयति, परन्त्वत्र बाहुलकान्निनिमित्तमाद्युदात्तत्वं

स्क०—सुतानां सोमानां पात्रे सुता इमे यन्ति गच्छन्ति। न चाप्रदीयमानानां गमनं सम्भवतीति दानमनेन लक्ष्यते। सम्प्रदाने चतुर्थीश्रुतेर्दानार्थ एव वा एतिः। प्रदीयन्त इत्यर्थः।

बाधित्वान्तोदात्तत्वमेव भवति। उणादीनां व्युत्पत्तिपक्षमभिप्रेत्य पूर्वोक्तं सर्वम्। अव्युत्पत्तिपक्षे तु इदंशब्दस्य "फिषोऽन्त उदात्त" इति सूत्रेण प्रातिपदिकत्वनिबन्धनोऽन्त उदात्त एव। एवं चेदंशब्दोऽन्तोदात्तः। ततो जसि प्रत्यये त्यदादित्वादिदमोऽकारान्तादेशे 'अतो गुण" इति पररूपे दस्य मत्वे जशः शावादेशे गुणे चेम इति रूपम्। तत्र जसः सुप्त्वा "अनुदात्तौ सुप्पिता"वित्यनुदात्तत्वेन तत्स्थानिकश्यादेशस्यापि स्थानिवत्त्वेनानुदात्तत्वमेव। त्यदाद्यत्वं मकारस्थानिकं मकारस्य व्यञ्जनत्वेन तत्स्थानिकस्य त्यदाद्यस्यापि स्थानिवत्त्वेनानुदात्तत्वमेव। तत इदंशब्दावयवदकाराकारेण त्यदादित्वनिबन्धनाकारस्य पररूपैकादेशे एकादेशस्योदात्तानुदात्तस्थानिकत्वेऽपि "एकादेश उदात्तेनोदात्त" इत्यनेनोदात्तत्वम्। ततो मत्वोत्तरं श्यादेशेन मकाराकारस्य गुणैकादेशेऽपि पररूपवद् गुणैकारस्याप्युदात्तत्वमिति इमेशब्दोऽन्तोदात्तः शेषनिघातेनादेरनुदात्तत्वम्। शुचयः। "शुच दीप्तौ" इति धातोः "इगुपधात्किदि"त्यौणादिकसूत्रेण इनि प्रत्यये तस्य कित्त्वे तन्निमित्तकस्योपधागुणस्य क्ङिति चेति निषेधे शुचिशब्दः। तत्र धातोः स्वरस्य प्रत्ययसामान्यनिबन्धनाद्युदात्तश्चेति स्वरेण निवृत्तौ प्राप्तायामत्र प्रत्ययगतनित्त्वनिबन्धनेन "ञ्नित्यादिर्नित्यमि"त्यनेन सतिशिष्टेन प्रत्ययसामान्यस्वरनिवृत्तावत्र शुचिशब्दे आद्युदात्तत्वमेव। ततः प्रथमाबहुवचने जसि प्रत्यये तन्निमित्तके 'जसि चे"ति गुणेऽयादेशे शुचय इति रूपम्। तत्र जसः सुप्त्वादनुदात्तत्वे तन्निमित्तकस्य "जसि चे"ति गुणस्यापि अनुदात्तशुचिशब्दीयेकारस्थानिकतया स्थानिवत्त्वेनानुदात्तत्वमेव तत्स्थानिकायादेशस्यापि पूर्ववदेव स्थानिवत्त्वेनानुदात्तत्वे शुचयःशब्दे आदिरुदात्तः परवर्तिनौ द्वितीयतृतीयावचावनुदात्तौ। तत्र द्वितीयस्योदात्तात्परत्वाद् "उदात्तादनुदात्तस्य स्वरित" इति स्वरितत्वम्। तृतीयस्य तु स्वरितात्परत्वात् 'स्वरितात्परेषामनुदात्तानाम्" इत्यनेन प्रचयः। संहितायां यन्तिशब्दावयवयकारस्य परत्वेन शुचयःशब्दावयवान्तिमसकारस्य स्थाने "ससजुषोरुरि"ति रुत्वे तस्य "हशि चे"त्युत्वे पूर्वेण सह गुणैकादेशे 'शुचयो' इति रूपं भवति। तत्रोत्वस्य व्यञ्जनस्थानिकतया व्यञ्जनस्य च व्यञ्जनमनुदात्तमित्यनुदात्तत्वेन स्थानिवत्त्वेनानुदात्तत्वम्। ततः पूर्ववर्तियकाराकारेण सहास्य गुणैकादेशे उभयोरप्यनुदात्तत्वेन स्थानिवत्त्वेनानुदात्तत्वमेव तस्यापि गुणौकारस्य शुचयःशब्दावयवचकाराकाररूपस्वरितात्परत्वेन "स्वरितात्परेषामनुदात्तानाम्" इति सूत्रेण प्रचयः स्वरः। यन्ति। "इण् गतौ" इत्यस्मादादादिकाद्धातोर्लटि प्रत्यये तस्य प्रथमपुरुषबहुवचने झादेशे तस्यावयवझकारस्य "झोऽन्त" इति सूत्रेणान्तादेशे मध्ये शपि तस्य "अदिप्रभृतिभ्यः शप" इत्यनेन लुकि "सार्वधातुकमपिदि"त्यनेन झिप्रत्ययस्य प्रकृते ङिद्वद्भावातिदेशेन इणो गुणनिषेधे "इणो यणि"त्यनेन इकारस्य यणि यन्तीति रूपम्। तत्र धातोः स्वरस्य सतिशिष्टेन प्रत्ययाद्युदात्तेन निवृत्त्या यन्तिशब्दे आद्युदात्तत्वं प्राप्तमासीत् परन्तु अत्रैतस्यातिङन्तपदात्परत्वेन "तिङ्ङतिङ" इत्यनेन सर्वानुदात्तत्वम्। संहितायां त्वस्य शुचयःशब्दीयचशब्दाकारात्स्वरितात्परत्वमिति उभयोरप्यचोः प्रचयः स्वरः। वीतये। 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु" इत्यादादिकाद्धातो 'र्मन्त्रे वृषेषपचमनविदभूवीरा उदात्त" इत्यनेन क्तिन्प्रत्ययः स चोदात्तः। एवं च वीतिशब्दे धातुस्वरबाधकप्रत्ययस्वरस्य नित्स्वरेण बाधे प्राप्ते तस्यापि बाधो विशेषविहितेन क्तिनः प्रत्ययस्योदात्तस्वरेणेति वीतिशब्दोऽन्तोदात्तः। तस्माच्चतुर्थ्येकवचनङे प्रत्यये "घेर्ङिती"ति सूत्रेण ङेप्रत्यये परतः पूर्वस्येकारस्य गुणेऽयादेशे वीतये इति पदम्। अत्र ङे प्रत्ययस्य सुप्त्वेन "अनुदात्तौ

किमर्थम् ? वीतये पानाय। के ? सोमासः सोमाः। दध्याशिरः। दधिमिश्राः। सोममिश्रं दधि आशीरुच्यते ॥ ५ ॥

**इति प्रथमस्य प्रथमे नवमो वर्गः ॥ ६ ॥**

---

सुप्पितौ इत्यनेनानुदात्तत्वात्तन्निमित्तकस्य गुणस्योदात्तेकारस्थानिकतया स्थानिवत्त्वेनोदात्तत्वम्। तत्स्थानिकस्यायादेशस्यापि पूर्ववत्स्थानिवत्त्वेनोदात्तत्वमिति वीतयेशब्दे आदिरनुदात्तो द्वितीय उदात्तस्तृतीयोऽनुदात्तः। तस्योदात्तात्परत्वात्स्वरितत्वम्। सोमासः। "षुञ् अभिषवे" इति धातोः "अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्" इत्यौणादिकेन सूत्रेण मनि प्रत्यये तन्निमित्तके धातोरुकारस्य गुणे सोमशब्दः। तत्र "धातोः" इत्यनेन धात्वन्तस्योदात्तत्वबोधकतया धातोरन्त उदात्तः प्राप्तः, मनः प्रत्ययत्वेन "आद्युदात्तश्च"ति सूत्रेण आदेरुदात्तत्वं प्राप्तं परं तु मनि प्रत्यये कृतेन नित्त्वेन तन्निमित्तकेन 'ञ्नित्यादिर्नित्यमि"त्यनेन विशेषविहितेनात एव सर्वविशिष्टेन स्वरेण धातुस्वरस्य प्रत्ययसामान्यस्वरस्य च निवृत्तौ सोमशब्द आद्युदात्तः। ततस्तस्मात्प्रथमाबहुवचने जसि प्रत्यये तस्य च 'आज्जसेरसुगि"त्यनेन असुगागमे तस्य कित्त्वेन "आद्यन्तौ टकितौ" इत्यनेनान्तावयवत्वेन प्रवृत्तौ सोम + असस् इत्यत्र 'प्रथमयोः पूर्वसवर्णः" इत्यनेन सोमशब्दीयमकाराकारासस्शब्दीयप्रथमाकारेण सहैकादेशपूर्वसवर्णदीर्घे अन्त्यस्य सकारस्य रुत्वे विसर्गे च सामासः पदं भवति। तत्र जसः सुप्त्वेन अनुदात्तौ सुप्पितौ" इत्यनेनानुदात्तत्वादसुगागमस्यापि 'आगमा अनुदात्ता" इत्यनेनानुदात्तत्वम्। ततः सोमशब्दाकारेण सवर्णदीर्घैकादेशे एकादेशस्य सोमशब्दीयानुदात्तमकाराकारासस्शब्दीयानुदात्ताकाररूपानुदात्तद्वयस्थानिकत्वेन स्थानिवत्त्वेनानुदात्तत्वम्। तस्य सोमशब्दीयसोकाररूपोदात्तात्परत्वादुदात्तादनुदात्तस्येति स्वरितः। परस्य सःशब्दीयाकारस्य स्वरितात्परत्वात्प्रचयः पदपाठे। संहितायां तु दधिशब्दीयदकारपरत्वेन रुत्वस्योत्वे गुणे 'सोमासो' इति रूपम्। तत्र रुत्वस्थानिकोत्वस्य व्यञ्जनस्थानिकत्वेनानुदात्तत्वं ततः पूर्वेण सह गुणौकारादेशेऽनुदात्तद्वयस्थानिकत्वेनानुदात्तत्वमेव स्थानिवत्त्वात्। दध्याशिरः। 'डुधाञ् धारणपोषणयोरि"त्यस्मात् "आदृगमहनजनः किकिनौ लिट् च' इत्यनेन किप्रत्यये लिड्वद्भावाद् द्वित्वे पूर्वस्याभ्यासमंज्ञायां ह्रस्वे जश्त्वे धातोराकारलोपे दधिशब्दः, "शॄ हिंसायामि"ति धातो 'क्विप् च"ति क्विपि ऋत इद्धातोरि"त्यनेन धात्वृकारस्य इत्वे रपरत्वे आङा सह समासे आशीःशब्दः। ततो दधिशब्देनाशीःशब्दस्य समासे समासात्प्रथमाबहुवचने जसि दध्याशिरःशब्दः। तत्र दधिशब्दे धातुस्वरस्य बाधकं प्रत्ययस्वरं बाधित्वा नित्स्वरः प्रवर्तत इति दधिशब्द आद्युदात्तः शेषनिघातेनान्तस्यानुदात्तत्वम्। आशीःशब्दे धातुस्वरेण इकार उदात्तः आङो निपातत्वादाद्युदात्तत्वम्। समासे "समासस्ये"त्यन्तोदात्तत्वं बाधित्वाऽव्ययस्य स्वरः प्राप्तस्तस्यापि 'गतिकारके"त्यनेन निरासे कृदुत्तरपदप्रकृतिस्वरेणाशीःशब्दोऽन्तोदात्तः। ततो दधिशब्देन बहुव्रीहौ समासस्वरापवादकेन "बहुव्रीहौ प्रकृत्या पूर्वपदमि"त्यनेन पूर्वपदप्रकृतिस्वरकत्वे दध्याशीःशब्द आद्युदात्तः। ततो जसः सुप्त्वादनुदात्तत्वमिति दध्याशिरःशब्दे आदिरुदात्तो द्वितीयोऽनुदात्तोऽपि उदात्तात्पर इति स्वरित 'उदात्तादनुदात्तस्य स्वरित" इत्यनेन। तृतीयचतुर्थौ तु शेषनिघातेनानुदात्तौ स्वरितात्परत्वात्प्रचितौ "स्वरितात्परेषामनुदात्तानामि"ति सूत्रेण।

सुतपाव्ने दध्याशिरः

अस्मिन्मन्त्रे इन्द्रमुद्दिश्य शुचयो दध्याशिरः सोमा वीतये यन्तीत्युच्यते तत्र वीतिर्भक्षणं तच्चेन्द्रकर्तृकमिति सामर्थ्यात् सुतपाव्ने इति चतुर्थीश्रुत्या च प्रतीयते। सूक्तमिदमैन्द्रमिति इन्द्रस्यैव वृत्तवर्णनमित्यतोऽपि इन्द्र-

वे०—सुतं सोमं यः पिबति तस्मै सुता इमे सोमाः पूताः पानाय गच्छन्ति दधि-मिश्रिताः ॥ ५ ॥

इति प्रथमस्य प्रथमे नवमो वर्गः ॥ ९ ॥

कर्तृकभक्षणस्य प्रतीतिः। इमे इति विशेषणाच्च पानार्थं कृतसन्नाहानां प्रत्यक्षाणां क्रियागतानामेव सोमानां प्रतीतिः। बहुवचनेन प्रयोगबाहुल्यस्य सोमे समारोपः। तेषां च पानार्थं सन्नद्धानां प्रकृते दध्याशिर इति विशेषभावो निर्दिश्यते। तच्चेदं यज्ञानुष्ठानप्रकारेण विरुणद्धि। तथाहि सोमयागे गृह्यमाणस्य सोमस्य वल्लीरूपस्याभिषवेण रसं निष्कास्य तत्तद्देवतोद्देशेन श्रुत्युक्तप्रक्रियया स रसस्तां तां देवतामुद्दिश्याग्नौ हूयते। देवता च मन्त्रमयीति मीमांसकसिद्धान्त इति मन्त्रभेदे देवताभेद इति निर्विवादम्। विग्रहवती वा देवतेतिमतेऽपि प्रधानदेवताबोधकशब्दभेदे देवताभेद इति स्वीकार्यमेव। देवतामुद्दिश्य सोमो दीयते हूयते देवतया सोमः पीतो भवतु इत्यादयः सोमपदघटिता व्यवहाराश्च सोम्यं रसमभिप्रेत्यैव भवन्ति इति यां देवतामभिप्रेत्य यादृशः सोमरसः श्रुत्या होतव्य इति विनियुज्यते तादृशस्य सोमरसस्य सैव देवता पानकर्त्री नान्येति शब्दप्रामाण्यवादिनामतिरोहितम्। सोमरसश्च देवतोद्देशेन हविष्ट्वेन विनियुज्यमानः कुत्र चन केवल एव विनियुज्यते यथैन्द्रवायवाश्विनादिग्रहस्थले, कुत्र चन च तस्य सोमरसस्य द्रव्यान्तरेण मिश्रण कृत्वा हविष्ट्वमुच्यते यथा मैत्रावरुणादिग्रहस्थले। मिश्र्यमाणं च द्रव्यं जलव्यतिरिक्तं त्रिविधं पयः सक्तवो दधि चेति। अत एवैतैर्मिश्रणमभिप्रेत्य मन्त्रेषु सोमानां गवाशिरः, यवाशिरः, दध्याशिर इति विशेषणानि तत्र तत्र प्रयुज्यन्ते। तत्र गवाशिर इत्यत्र गोशब्दस्य प्रकृतिबोधकस्य विकृतौ प्रयोगेण पयः-परता। एवं चैष विशेषो न देवतामात्रसम्बन्धिनि सोमहोममात्रे किन्तु कस्याश्चन कृते कश्चनेति विनियोगा-नुसारेण विस्पष्टं प्रतीयते। तत्र मित्रावरुणौ उद्दिश्य यदा ग्रहपात्रे सोमरसो होमार्थं ग्रहीतव्यस्तदानीं तस्य पयसा मिश्रणं कर्तव्यतयोच्यते 'मैत्रावरुण पयसा श्रीणन्ती''ति। श्रयणं च मिश्रणम्। मिश्र्यमाणस्य च द्रव्यस्य आशिर्शब्देन व्यवहारः। एवञ्च गवाशिर इति विशेषणविशिष्टसोमपानकर्तृत्वं मित्रावरुणयोरेव न त्विन्द्रे। इन्द्रस्य मित्रावरुणापेक्षया भिन्नत्वात्। भिन्नदेवतावादे इन्द्रमित्रवरुणानां परस्परं भेदात्। एकदेवतावादपक्षश्च मीमांसकानामनभिमतः। निरुक्तकारादीनामपि अनभीष्टः। अत एव नैर्देवतात्रयवाद आस्थीयते। तस्मिंश्च मित्रस्य मध्यमस्थानवासिदेवेषु निर्देशादिन्द्राभिन्नत्वं, वरुणस्य द्युस्थानवासिदेवतास्वपि निर्देशादिन्द्राभिन्नत्वमादित्याभिन्नत्वं च तत्रेन्द्राभिन्नो वरुणो भिन्न आदित्याभिन्नोऽपि वरुणो भिन्न इत्यास्थेय-मन्यथा देवतात्रयवादो व्याहन्येत। एव च इन्द्राभिन्नवरुणस्य मित्रसाहित्यान्मैत्रावरुणग्रहदेवतात्वेन ग्रहणाद्गवाशिर इति विशेष्यमाणः सोमो मित्रावरुणाभ्यां दीयमानस्ताभ्यामर्थात्पीयमानोऽपि इन्द्रेणैव पीयते इति गवाशिर इति विशेषितसोमपानकर्तृत्वमिन्द्रे संभवति निरुक्तकारपक्षे, मीमांसकपक्षे तु तदसम्भव एव। तैरिन्द्रमित्रवरुणादीनां भेदस्वीकारात्। न च सोमपानं यावती वा बलकृतिरिन्द्रस्यैव कर्म तदिति परिभाषणं निरुक्तकारादीनां न तु मीमांसकानामिति मित्रावरुणाभ्यामिन्द्रस्य भेदे ताभ्यां पीयमाने नेन्द्रेण पीयत इति स्वीकारेऽपि तत्पक्षे न दोषः। निरुक्तकाररीत्या चेन्द्रपानस्योपपत्तिः प्रदर्शितैवेति वाच्यम्। गवा-शिरस्थले यथा कथं चोक्तरीत्या निर्वाहेऽपि दध्याशिरःस्थले तावताऽनिर्वाह एव। यवाशिरः स्थलेऽपि कथं चनेन्द्रपरत्वं नेतुं शक्यं यतो यवाशिर इति विशेषवतां सोमानां मन्थिग्रहे श्रौतसूत्रे उच्यते "मन्थिनमयं वेन इति सक्तुभिरेनं श्रीणाति मनो न येष्विती''ति। तस्यायमर्थः—"अयं वेन'' इति मन्त्रेण मन्थि-

आ त्वेति सूक्तस्य षष्ठीमृचमाह :—

त्वं सुतस्य॑ पी॒तये॑ स॒द्यो वृ॒द्धो अ॑जायथाः ॥
इन्द्र॒ ज्यैष्ठ्या॑य सुक्रतो ॥ ६ ॥

त्वम् । सु॒तस्य॑ । पी॒तये॑ । स॒द्यः । वृ॒द्धः । अ॒जा॒य॒थाः ॥
इन्द्र॑ । ज्यैष्ठ्या॑य । सु॒क्र॒तो॒ इति॑ सुऽक्रतो ॥ ६ ॥

पात्रे सोम आसेचनीयो 'मनो न येषु' इत्यनेन सक्तवोऽत्र सम्मिश्रणीया इति । सक्तुमिश्रणाभिप्रायक एव यवाशिर इति व्यवहारो मन्त्रेषु । तत्रापि गवाशिर इति वत्प्रकृतिपरस्य शब्दस्य विकृतौ प्रयोगः । तत्र मन्थिग्रहस्य "अयं वेन" इति मन्त्रेण सोमेन पूरणात्पूरणस्य च होमार्थत्वात वेन एव देवता तत्र मन्थिग्रवेनोद्देश्या । वेनस्य च मध्यमस्थानवासिषु देवतासु निघण्टौ वचनान्मध्यमस्थानवासिदेवतायाश्चेन्द्राभिन्नत्वेन वेनेन पीयमानोऽपि सोम इन्द्रेणैव पीयत इति निरुक्तकारमते विरोधाप्राप्तेः । वस्तुतस्तु अत्रापि निरुक्तपक्षेऽनिर्वाह एव यतोऽस्य मन्थिग्रहस्य सोमपानकर्तारश्चानेके देवा भवन्ति । अतएव "देवास्त्वा मन्थिपाः प्रणयन्तु" इति मन्त्रे मन्थिपा इति बहुवचनं प्रयुक्तम् । किञ्च मन्थिहोमे प्रयुज्यमानमन्त्रतोऽपि मन्थिपानां देवानामनेकत्वम् स्पष्टं भवति । अयं तद्धोममन्त्रः । "सा प्रथमा संस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रो अग्निः । स प्रथमो बृहस्पतिश्चि-कित्वानि"त्यादिकः । तत्राग्नेरपि निर्देशात्तस्यापि तत्र सोमपानप्रतीतेः । किञ्च तावतापि मन्थिपा इति बहुवचनस्यानुपपत्तिरेव । भवतु वा यथाकथंचिदत्रेन्द्रसम्बन्धपरता निरुक्तपक्षे । दध्याशिर इति विशेषः परमि-न्द्रस्य पातव्ये सोमे न सम्भवत्येव । तथाहि - दध्न आशीस्त्वेन विनियोगस्तृतीयसवने आदित्यग्रहे । "आदित्यं ग्रह गृण्हाति संस्रवेभ्यः कदाचनेति पुनः कदाचनेति दध्ना श्रीणात्येनं यज्ञो देवानामिति" श्रौतसूत्रे वचनात् । विनीतं दधि आशीः शब्दबोध्यमिति श्रौतसूत्रव्याख्यायां कर्कोपाध्यायाः । एव दध्ना मिश्रणमादित्यग्रहे । ग्रहश्चासावादित्यदेवताक इति कृत्वा आदित्यग्रह इति तस्य नाम । आदित्यार्थं गृहीतसोमस्यादित्येन पाने कृतेऽपि इन्द्रेणासम्बन्धात् इन्द्रपानं न दध्याशिर इति विशेषिते सोमे । आदित्याश्च द्युस्थानवासि-नो देवा इति तैः पीयमानस्यापि इन्द्रपानासम्बन्धात् । नच कदाचनेति ऐन्द्राऽऽदित्यग्रहे सोमासेचना-दिन्द्रसम्बन्ध आदित्यग्रह इति कल्पनं सांप्रतम् । विनियोगानुसारेण मन्त्राणां देवत्वस्य निर्णयात् । अतएव मीमांसकैः"कदाचन स्तरीरसीत्यैन्द्र्या गार्हपत्यमुपतिष्ठत' इत्यत्रेन्द्रस्य "कदाचनस्तरीरसी"ति मन्त्रस्थेन्द्र-पदस्य परमैश्वर्यवत्त्वेन हेतुना गार्हपत्याग्निपरता निर्णीता । एवं प्रकृतेऽपि विनियोगानुसारेणादित्यपरताया स्तत्र वक्तव्यत्वात् । एव च दध्याशिर इति विशेषणमत्रैन्द्रे सूक्तेऽनुपपन्नमनुष्ठानानुसारेण । इन्द्रमुद्दिश्य दध्याशिर इति दधिसम्मिश्रसोमस्याविधानात् । एवं चेदमपि इन्द्रस्यादित्याभिन्नत्वबोधने प्रमाणम् । वस्तु-तस्तु आदित्येभ्य इति बहुवचनात्सर्वेषामादित्यानां ग्रहणे वक्तव्ये आदित्यानां द्वादशसंख्यायुक्तत्वस्य ब्राह्मणे वचनादादित्येषु द्वादशसु इन्द्रस्याप्यन्यतमत्वमिति आदित्यैः पीयमानः सोम इन्द्रेण पीयत एवेति ऐन्द्रसूक्ते तादृशमंशतः सम्बन्धमभिप्रेत्यैवेन्द्रं प्रति दध्याशिर इति सोमविशेषणमुपपद्यते । निरुक्तकारमतविरोधः परमव-शिष्यते सोऽपि नात्र भवतीति अवसरान्तरे प्रदर्शयिष्यत इति दिक् ।

सुक्रतो = शोभनकर्मन् शोभनप्रज्ञ वा हे इन्द्र ! त्वम् सुतस्य = अभिषुतस्य सोमस्य पीतये = पानार्थं ज्यैष्ठ्याय = देवेषु ज्येष्ठत्वार्थं च सद्यः = तस्मिन्नेव क्षणे वृद्धोऽजायथाः = अभिवृद्धोत्साहेन युक्तोऽभूः ॥

पीतये। "पा पाने" इत्यस्मात् स्थागापापचो भावे" (पा० ३।३।९४) इति क्तिन्। "घुमास्था" इत्यादिना (पा० ६।४।६६) ईत्वम्। तस्य नित्त्वेऽपि व्यत्ययेन प्रत्ययोदात्तत्वम्। उत्तरसूत्रगतमुदात्तपदमत्रापि वा योजनीयम्। "सद्यः परुत्परारि" इति सूत्रेण (पा० ५।३।२२) समानेऽहनीत्यर्थे समानस्य सभावो द्यश्च प्रत्ययो निपात्यते। प्रत्ययस्वरेणोदात्तः। वृद्धः। "वृधु वृद्धौ"। "उदितो वा" (पा० ७।२।५६) इति क्त्वाप्रत्यय इटो विकल्पितत्वात् "यस्य विभाषा" (पा० ७।२।१५) इति निष्ठायामिट्प्रतिषेधः। प्रत्ययस्वरेणोदात्तः। ज्यैष्ठ्याय। ज्येष्ठस्य भावो ज्यैष्ठ्यम्। "गुणवचनब्राह्मणादिभ्यः कर्मणि च" (पा० ५।१।१२४) इति ष्यञ्। ञित्त्वादाद्युदात्तः ॥ ६ ॥*

---

त्वं सुतस्य

*त्वम्। युष् इति सौत्राद्धातो 'युष्यसिभ्यां मदिग्' इत्यौणादिकेन सूत्रेण मदिक्प्रत्यये युष्मच्छब्दः। तस्मात्प्रथमैकवचने सुप्रत्यये 'ङे प्रथमयोरम्' इति तस्यामादेशे "त्वमावेकवचने" इति युष्मच्छब्दावयवमपर्यन्तभागस्य त्वादेशे "शेषे लोप' इत्यवशिष्टस्य भागस्य लोपेऽ 'मि पूर्व' इत्यमःपूर्वरूपैकादेशे त्वमिति रूपम्। तत्र "धातोरि"ति धातुस्वरस्य "आद्युदात्तश्चे"ति प्रत्ययस्वरेण निवर्तनाद्युष्मच्छब्दोऽन्तोदात्तः, औणादिकेषु अव्युत्पत्तिपक्षे तु "फिषोऽन्त" इति प्रातिपदिकस्वरेणान्त उदात्तः। सुस्थानिकामः स्थानिवत्त्वेन सुप्त्वा"दनुदात्तौ सुप्पितावि"त्यनेनानुदात्तत्वम्। त्वादेशस्य तु युष्म इत्यत्र भागे जायमानस्य स्थानिवत्त्वेनानुदात्तत्वम्। मपर्यन्तभागादवशिष्टभागस्य तु उदात्तत्वेन तल्लोपनिमित्तस्यामोऽकारस्य "अनुदात्तस्य च यत्रोदात्तलोप" इत्यनेनोदात्तत्वम्। ततस्तेन सह त्वशब्दीयाकारस्य पररूपैकादेशस्योदात्तस्थानिकतया "एकादेश उदात्तेनोदात्त" इत्युदात्तत्वमिति त्वंशब्द उदात्तः। सुतस्य। षुञ् धातोर्निष्ठाक्तप्रत्यये सुतशब्दः। ततः षष्ठ्या एकवचने ङसि तस्य स्थाने "टाङसी'ति स्यादेशः। तत्र धातुस्वरं बाधित्वा प्रत्ययस्वरेण सुतशब्दोऽन्तोदात्तः। ङसः सुप्त्वा"दनुदात्तौ सुप्पितावि"त्यनेनानुदात्तत्वेन तत्स्थानिकस्य स्यादेशस्यापि स्थानिवत्त्वेनानुदात्तत्वम्। एवं च सुतस्येत्यत्रादिरनुदात्तो द्वितीय उदात्तस्तृतीयोऽनुदात्तोऽप्युदात्तात्पर इति स्वरित "उदात्तादनुदात्तस्य स्वरित" इत्यनेन। पीतये। पा पाने इति धातोः "स्थागापापचो भावे" इत्यनेन क्तिनि प्रत्यये आकार "ईहल्यघो"रित्यनेनाकारस्येरादेशे पीतिशब्दः। तत्र धातोरिति धातोरन्त उदात्तः। क्तिनः प्रत्ययस्य "आद्युदात्तश्चे"ति आदेरुदात्तः। क्तिनो नित्त्वेन नित्त्वनिमित्तकञ्नित्यादिर्नित्यमिति निदन्तादेरुदात्तः प्राप्तस्तत्र सति शिष्टत्वेन पूर्वपूर्वोपमर्देनोत्तरोत्तरस्य प्राप्त्या प्रकृते नित्त्वनिमित्तकः पीतिशब्दस्यादिरुदात्तः प्राप्तः परन्तु व्यत्ययेन तं बाधित्वान्तस्योदात्तत्वम् इति पीतिशब्दोऽन्तोदात्तः। ततश्चतुर्थ्येकवचनङे प्रत्यये परे पीतिशब्दान्त्येकारस्य गुणेऽयादेशे पीतये इति रूपम्। तत्र ङेप्रत्ययस्य सुप्त्वादनुदात्तत्वात् तन्निमित्तकतिशब्देकारस्य

स्क०—त्वं सुतस्य सोमस्य पीतये पानार्थं सद्यस्तस्यामेव वेलायां शरीरेण च वीर्येण च परिवृद्धः प्रतिबन्धकापनयनसमर्थोऽजायथाः जायसे भवसि। न च केवलायै सोमपीतये किन्तर्हि? हे इन्द्र ज्यैष्ठ्याय च। ज्येष्ठाः प्रशस्यतमाः प्रवृद्धतमा वा। तेषां कर्म ज्यैष्ठ्यं तस्मै च वृत्रवधादिकाय च। हे सुक्रतो सुकर्मन् सुप्रशस्य वा। अथवा पीतये इति तृतीयार्थे चतुर्थी। त्वं सुतस्य सोमस्य पीतये सद्य एव समान एवाहनि पानानन्तरमेव शरीरेण वीर्येण च परिवृद्धो भवसि किमर्थम्? ज्यैष्ठ्याय सुकर्मणे वृत्रवधादिकाय च॥ ६॥

वे०-त्वं सुतस्य पानार्थं सद्यो वृद्धो भवसि प्रवृद्धशरीर इन्द्र श्रेष्ठं कर्म कर्तुं शत्रुषु सुप्रज्ञ॥ ६॥

---

गुणस्य उदात्तेतिशब्दीयेकारस्थानिकत्वेन स्थानिवत्त्वेनोदात्तत्वम्। तत्स्थानिकायादेशस्यापि पूर्ववदेवोदात्तस्थानिकत्वेन स्थानिवत्त्वादुदात्तत्वमिति पीतयेशब्दे आदिरनुदात्तो द्वितीय उदात्तस्तृतीयोऽनुदात्तोऽप्युदात्तात्पर इति "उदात्तादनुदात्तस्ये"ति स्वरितः। सद्यः। "सद्यः परुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युरिति" सूत्रेण समानेऽहन्यर्थे सद्यःशब्दस्य निपातनम्। तत्र समानस्य सभावोऽहन्यर्थे द्यस् प्रत्यय इति कल्पनायां प्रत्ययस्वरेण सद्यःशब्दोऽन्तोदात्तः। सद्यःशब्दस्याव्ययत्वेन प्रातिपदिकत्वाद्वा 'फिषोऽन्त उदात्त' इत्यनेन वान्तोदात्तः। वृद्धः। वृधु वृद्धाविति धातोर्निष्ठाक्तप्रत्यये तस्य "यस्य विभाषे"ति इडागमनिषेधे तकारस्य "झषस्तथोर्धोऽधः"ति धकारादेशे पूर्वधकारस्य जश्त्वेन दकारे वृद्धशब्दः। तत्र धातुस्वरं बाधित्वा प्रत्ययस्वरेण वृद्धशब्दोऽन्तोदात्तः। तस्याजायथाःशब्दे परे संहितायां सकारस्य प्रथमैकवचनसुरूपस्य रुत्वेऽतोरोरित्युत्वे गुणे पूर्वेण सह ततः परेणाकारेण पूर्वरूपे प्राप्ते प्रकृतिभावेन निषिद्धे वृद्धो अजायथा इति संहितारूपम्। अत्र रुस्थानिकोत्वस्य व्यञ्जनस्थानिकतया स्थानिवत्त्वेनोदात्तत्वम्, तस्योकारस्य पूर्ववर्तिवृद्धशब्दीयोदात्तान्त्याकारेण गुणैकादेशे एकादेशस्योदात्तानुदात्तोभयस्थानिकतया स्थानिवत्त्वेनोभयस्वरकत्वेन स्वरितत्वे प्राप्ते तद्बाधकेन प्रकृते "एकादेश उदात्तेनोदात्त" इत्यनेनोदात्तः। अजायथाः। "जनी प्रादुर्भावे" इति धातोर्लङि आत्मनेपदसञ्ज्ञके मध्यमपुरुषैकवचनथास्प्रत्यये मध्ये श्यनि धातो"र्ज्ञाजनोर्जा" इति जादेशेऽडागमेऽजायथा इति पदम्। तत्र धातुस्वरं बाधित्वा थास्प्रत्ययस्वरः प्राप्तः श्यनो विकरणत्वेन तस्य स्वरस्य सतिशिष्टत्वाभावेन थासः स्वरस्यानिवर्तकत्वेऽपि अडागमस्य "लुङ्लङ्लृङ्क्ष्वडुदात्त" इत्यनेनोदात्तत्वबोधनेन तेन थासः स्वरस्य निवृत्त्या आद्युदात्तं पदं प्राप्तं परन्तु अत्रैतस्यातिङन्तपदात्परत्वेन "तिङ्ङतिङः" इति सर्वनिघातेन सर्वानुदात्तत्वम्। तस्य संहितायां वृद्धोशब्दावयवोदात्तान्त्यौकारात्परत्वादाद्यस्याकारस्य स्वरित "उदात्तादनुदात्तस्य स्वरित" इत्यनेन द्वितीयतृतीयचतुर्थानां तु स्वरितात्परत्वात्प्रचयः स्वरः। इन्द्र। इदि परमैश्वर्ये इति धातोः "ऋज्रेन्द्र" इत्याद्यौणादिकेन सूत्रेण रनि प्रत्यये निदन्तत्वादाद्युदात्त इन्द्रशब्दः। तस्य सम्बोधनप्रथमान्तस्येदं रूपमिन्द्रेति। तस्य सम्बोधनप्रथमान्ततया आमन्त्रितसंज्ञकत्वाद् "आमन्त्रितस्य च" इति षष्ठाध्यायस्थेन सूत्रेण आदिरुदात्तः। अन्त्यः स्वरः शेषनिघातेनानुदात्तः। ज्यैष्ठ्याय। वृधु वृद्धाविति धातोर्निष्ठाक्तप्रत्यये इडागमनिषेधे वृद्धशब्दः। तस्मादिष्ठनि प्रत्यये "वृद्धस्य च" इति सूत्रेण वृद्धशब्दस्य स्थाने ज्यादेशः। ततो गुणे ज्येष्ठ इति शब्दः। तस्माद्भावेऽर्थे "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इत्यनेनाप्यत्र आदिस्वरवृद्धौ अन्त्यस्याकारस्य "यस्येति च" ति लोपे ज्यैष्ठ्यशब्दः।

सप्तमीमृचमाह :—

आ त्वा॑ विश॒न्त्वा॒शव॒ः सोमा॑स इन्द्र गिर्वणः ॥
शं ते॑ सन्तु॒ प्रचे॑तसे ॥ ७ ॥

आ । त्वा॒ । वि॒श॒न्तु॒ । आ॒शव॑ः । सोमा॑सः । इ॒न्द्र॒ । गि॒र्व॒ण॒ः ॥
शम् । ते॒ । सन्तु॒ । प्र॒ऽचे॑तसे ॥ ७ ॥

ततश्चतुर्थ्येकवचनङेप्रत्यये तस्य यादेशे पूर्वस्याकारस्य दीर्घे ज्यैष्ठ्यायेतिपदम् । तत्र वृद्धशब्दे धातुस्वर बाधित्वा प्रत्ययस्वर इति वृद्धोशब्दोन्तोदात्तः । तत इष्ठनि तन्निमित्तकज्यादेशस्य स्थानिस्त्वेनान्तोदात्तत्वे तस्य इष्ठन्प्रत्ययस्वरेण निवृत्तौ प्राप्तायां प्रत्ययस्वरापवादकेन प्रत्ययगतनित्त्वनिबन्धनेन "ञ्नित्यादिर्नित्यमि"त्यनेन निदन्तस्यादेरुदात्तत्वमिति ज्यशब्दाकार उदात्तः । शेषनिघातेनेष्ठस्वरयोरनुदात्तत्वे तत्र इष्ठन इकारस्य ज्यशब्दाकारेण गुणादेशे तस्यैकादेशस्योदात्तज्यशब्दाकारानुदात्तेष्ठन्शब्देकारोभयस्थानिकतयोभयस्वरकत्वेन स्वरितत्वे प्राप्ते तद्बाधकेन "एकादेश उदात्तेनोदात्त" इत्यनेनोदात्तत्वम् । ततो ज्येष्ठशब्दाद्भावे ष्यञ् प्रत्ययेऽत्रापि प्रत्ययस्वरेण प्रकृतिस्वरस्य निवृत्तौ प्राप्तायां प्रत्ययस्वरापवादकेन ष्यञ् प्रत्ययगतञित्त्वनिमित्तकेन ञ्नित्यादिर्नित्यमित्यनेन ञिदन्तादेरुदात्तत्वबोधनाज्ज्यैष्ठ्यशब्दीयाद्यैकार उदात्तः शेषनिघातेन ष्यञोऽकारोऽनुदात्तः । ततः ष्यञ्-निमित्तकादिवृद्धेरैकारस्य स्थानिवत्त्वेनोदात्तत्वम् । ङेप्रत्ययस्य तु सुप्त्वेनानुदात्तत्वे तत्स्थानिकयादेशस्यापि स्थानिवत्त्वेनानुदात्तत्वम् । तन्निमित्तकस्य ष्ठ्यशब्दाकारस्य दीर्घस्यापि अनुदात्तस्थानिकत्वेनानुदात्तत्वं स्थानिवत्त्वात् इति ज्यैष्ठ्यायशब्दे आदिरुदात्तो द्वितीयतृतीयावचावनुदात्तौ । तत्रापि द्वितीयस्य प्रथमादुदात्तात् परत्वात् उदात्तादनुदात्तस्य स्वरित इति स्वरितः । तृतीयस्य तु स्वरितात्परत्वात् स्वरितात्परेषामनुदात्तानामिति सूत्रेणैकश्रुत्यपरपर्यायः प्रचयः स्वरः । सुक्रतो । डुकृञ् करणे इत्यस्माद्धातोः "कृञः क्रतुः" इत्यौणाणादिकेन सूत्रेण क्रतुप्रत्यये गुणनिषेधे यणि क्रतुशब्दः । तस्य सुशब्देन बहुव्रीहिः । ततः सम्बोधनप्रथमैकवचने सौ तन्निमित्तपूर्वेकारस्य गुणे ओकारे सम्बोधनप्रथमैकवचनस्य "एङ्ह्रस्वात्सम्बुद्धेरि"ति लोपे सुक्रतो शब्दः । तत्र "धातोरि"त्यनेन कृञः अन्त उदात्तः प्राप्तः । "आद्युदात्तश्चे"त्यनेन क्रतुप्रत्ययस्यादिरुदात्तः प्राप्तः । तत्र प्रत्ययस्वरस्य सतिशिष्टत्वेन "सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य" इति बलीयस्त्वाद्धातुस्वरस्य निवृत्त्या शेषनिघातेनानुदात्तत्वे प्रत्ययस्वरस्य शेषात्क्रतुशब्द आद्युदात्तः शेषनिघातेनान्तानुदात्तश्च । सुशब्दस्य निपातत्वेन "निपाता आद्युदात्ता" इत्याद्युदात्तत्वम् । ततः सु + क्रतुशब्दयोर्बहुव्रीहिसमासे समासस्य समासस्येति सूत्रेणान्तस्योदात्तत्वे प्राप्ते समासान्तस्वरापवादकेन "बहुव्रीहौ प्रकृत्या पूर्वपदमि"त्यनेन पूर्वपदप्रकृतिस्वरकत्वविधानात्सुशब्दस्य प्रकृतिस्वरकत्वे प्राप्ते तदपवादेन "नञ् सुभ्याम्" इत्यनेनोत्तरपदान्तस्योदात्तत्वे प्राप्ते "नञ् सुभ्यामि"त्यस्याप्यपवादेन "क्रत्वादयश्चे"त्यनेनोत्तरपदस्य क्रतुशब्दस्यादेरुदात्तत्वबोधनात्सुक्रतुशब्दे द्वितीयः उदात्तः । ततः सम्बोधने तन्निमित्तकगुणस्य अनुदात्तोकारस्थानिकतया स्थानिवत्त्वेनानुदात्तत्वे सुक्रतोशब्दस्यापि मध्यस्यैवोदात्तस्यावशेषे प्राप्ते तस्यापवदनं "आमन्त्रितस्य चे"त्याष्टमिकेन सूत्रेणेति तत्सूत्रवशतः सुक्रतोशब्दस्य सर्वनिघाते सर्वानुदात्तं तत् पदम् । तस्य संहितायां ज्यैष्ठ्यायपदीयष्ठ्यारूपस्वरितात्परत्वात्सर्वेषां प्रचयः स्वरः स्वरितात्परेषामनुदात्तानामित्यनेन ।

हे इन्द्र ! त्वा = त्वाम् सोमासः = सोमा आविशन्तु = आभिमुख्येन प्रविशन्तु। कीदृशाः सोमाः ? आशवः = सवनत्रये, प्रकृतिविकृत्योर्वा व्याप्तिमन्तः। कीदृशेन्द्र ? गिर्वणः = गीर्भिः स्तुतिभिः संभजनीय देवविशेष। "गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति" (नि० ६।१४) इति यास्कः। तथाविध हे इन्द्र ! ते = तव प्रचेतसे = प्रकृष्टज्ञानाय शम् = सुखरूपाः सोमाः सन्तु ॥

गिर्वणः। गृणन्तीति गिरः स्तुतयः। "गॄ शब्दे" क्विपि "ऋत इद्धातोः" (पा० ७।१।१००) इतीत्वं रपरत्वं च। गीर्भिर्वन्यते सेव्यत इति गिर्वणाः। "वन षण संभक्तौ"। संभक्तिः सेवा। "सर्वधातुभ्योऽसुन्" (उ० ४।१९०) इत्यसुन् प्रत्ययः। प्रचेतसे। बहुव्रीहौ पूर्वपद-प्रकृतिस्वरत्वम् ॥ ७ ॥*

---

आ त्वा विशन्तु

* आ। निपातत्वा"न्निपाता आद्युदात्ता" इत्यनेनाद्युदात्तः। त्वा। युष्धातोः सौत्रात् "युष्य-सिभ्यां मदिक्" इत्यौणादिकेन सूत्रेण मदिक्प्रत्ययः। युष्मच्छब्दात्तस्मात् द्वितीयैकवचनेऽमि प्रत्यये तस्यापि "ङे प्रथमयोरमि"त्यादेशे युष्मच्छब्दावयवमपर्यन्तस्थाने "त्वमावेकवचन" इति सूत्रेण त्वादेशे "शेषे लोप" इत्यनेन मपर्यन्तादवशिष्टस्य भागस्य लोपे प्राप्ते "द्वितीयायां चे"त्यनेनाकारान्तादेशे त्व+अ+आ इत्यत्र पूर्वम् "अतो गुणे" इति पररूपादेशे ततः सवर्णदीर्घे "ऽमि पूर्व" इति पूर्वरूपैकादेशे त्वामिति द्वितीयैकवचनान्तस्थाने "ऽनुदात्तं सर्वमपादादावि"त्यधिकारे "त्वामौ द्वितीयाया" इत्यनेनानुदात्तत्वादेशः। तस्यानुदात्तत्वं पदपाठे। संहितायां तु आरूपोदात्ताकारात्परत्वेनो"दात्तादनुदात्तस्य स्वरित" इत्यनेन स्वरितः। विशन्तु। विश प्रवेशने इति तौदादिकाद्धातोर्लोटि प्रथमपुरुषबहुवचने परस्मैपदे झिप्रत्यये "झोऽन्त" इति प्रत्ययावयवझस्यान्तादेशे "एरुरि"तीकारस्योत्वे मध्ये शबपवादे "तुदादिभ्यः श" इति शे प्रत्यये "सार्वधातुकमपिदि"त्यनेन तस्यापित्त्वा-न्ङित्त्वातिदेशे ङित्त्वा"त्क्ङिति चे"ति गुणनिषेधे विशन्तु इति रूपम्। तत्र धातोः स्वरस्य झिप्रत्ययस्वरेणा"द्युदात्त-श्चे"त्यनेनापहारेण तस्याद्युदात्तत्वे प्राप्ते तस्य "तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङो" रित्यनेन लसार्वधातुकत्वादनुदात्तत्वे शप्रत्ययस्वरेण मध्योदात्तं पदं प्राप्तं परन्त्वत्रैतस्यातिङन्तपदात्परत्वेन "तिङ्ङतिङ" इत्यनेन सर्वानुदात्तत्वम्। संहितायां तस्य पदस्य त्वेति स्वरितात्परत्वात्प्रचयः स्वरः "स्वरितात्परेषामनुदात्ता-नाम्" इत्यनेन। आशवः। अशू व्याप्ताविति धातोः "कृवापाजिमिस्वदिसाध्यशिभ्य उण्" इत्यौणादिकेन सूत्रेणोणि प्रत्यये णित्त्वा"दत उपधाया" इति धातूपधाकारस्य वृद्धौ आशुप्रातिपदिकम्। तस्मात्प्रथमाबहुवचने जसि "जसि चे"त्यनेन प्रातिपदिकोकारस्य गुणेऽच्परत्वादायादेशे आशव इति रूपम्। तत्र धातोरित्यनेन धातोरन्तस्योदात्तत्वं प्राप्तम् उणः प्रत्ययत्वाद् "आद्युदात्तश्चे"त्यनेन तस्यादेरुदात्तत्वम् प्राप्तम्। तत्र प्रत्ययस्य तदीयस्वरस्य प्रकृतिस्वरे पूर्वं प्रवृत्तत्वे सति शिष्टत्वात् "सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य" इत्यनेन प्रत्ययस्वरस्य बलीयस्त्वबोधनात्तेनानुदात्तं पदमेकवर्जमितिपरिभाषासाहित्येन प्रकृतिस्वरस्य दुर्बलस्यानुदात्तत्व-साधनमिति प्रत्ययस्वरोऽवतिष्ठते। ततस्तन्निमित्तिकाया उपधावृद्धेराकारस्यानुदात्ताकारस्थानिकतया स्थानिवत्त्वेनानुदात्तत्वम्। उण् प्रत्ययस्योदात्तत्वात्तदीयोकारस्थाने जातस्य गुणौकारस्य स्थानिवत्त्वेनोदात्तत्वं

स्क०—आ त्वा विशन्तु प्रविशन्तु। त्वया पीयन्ताम् इत्यर्थः। कीदृशः? आशवः स्वकार्यकरणे क्षिप्राः। के? सोमासः सोमाः। हे इन्द्र गिर्वणः। गिरः स्तुतयः वनतिः सम्भजनार्थः। स्तुतिभिः सम्भजनीय। स्तुतीनां वा सम्भक्त। आविभ्य च शम्। सुखनामैतत्। सुखं तुभ्यं सन्तु भवन्तु प्रचेतसे प्रकृष्टज्ञानाय॥ ७॥

वे०—आविशन्तु त्वा क्षिप्राः सोमा इन्द्र गीर्भिर्वननीय शं च तुभ्यं भवन्तु सुमतये॥ ७॥

तस्यावादेशस्यापि तथैवोदात्तत्वमिति शकारोत्तरवर्ती अकार उदात्तः। जसस्तु सुप्त्वादनुदात्तत्वमिति आशवःशब्दे आदिरुदात्तो द्वितीय उदात्तस्तृतीयोऽनुदात्तः सन् पदपाठे उदात्तात्परत्वात्स्वरित "उदात्तादनुदात्तस्य स्वरित" इत्यनेन। संहितायां तु सोमास. पदीय उदात्तः पर इति आशवःशब्दीयान्त्यस्यानुदात्तापरपर्यायः सन्नतर "उदात्त स्वरितपरस्य सन्नतर" इत्यनेन। सोमासः। षुञ् अभिषव इति धातोः "अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिणीभ्यो मन्"इत्यौणादिकेन सूत्रेण मन् प्रत्यये तन्निमित्तकगुणे सोमशब्दः। तस्मात्प्रथमाबहुवचने जसि तस्य "आज्जसेरसुगि"त्यसुगागमे "प्रथमयोः पूर्वसवर्ण" इति पूर्वसवर्णदीर्घैकादेशे रुत्वे विसर्गे सोमासः पदम्। तत्र धातोरन्तस्योदात्तत्वविधायकधातोरित्यस्य प्रवृत्त्या धात्वन्त उदात्तः प्राप्तः परन्तु ततोऽपि सतिशिष्टत्वाद्बलीयसा प्रत्ययसामान्यनिमित्तकेन "आद्युदात्तश्चे"त्यनेन प्रत्ययस्यादिरुदात्तः प्राप्तः परन्त्वस्य तस्यापवादकेन प्रत्ययगतनित्त्वनिमित्तकेन ञ्नित्यादिर्नित्यमित्यनेन निदन्तादेरुदात्तत्वविधानान्निदन्तादिर्धातोरुकार उदात्तस्तत्स्थानिकगुणौकारस्य तु स्थानिवत्त्वेनोदात्तत्वमिति सोमशब्द आदिरुदात्तः शेषनिघातेनान्तस्यानुदात्तत्वम्। ततो जसः सुप्त्वेनानुदात्तत्वादसुगागमस्यागमत्वादनुदात्तत्वेन सोमास.पदे आदिरुदात्तो द्वितीयतृतीयावचावनुदात्तौ। तत्रापि द्वितीयस्योदात्तात्परत्वात्स्वरितत्व"मुदात्तादनुदात्तस्य स्वरित" इत्यनेन। तृतीयस्य तु स्वरितात्परत्वात्प्रचयस्वरः "स्वरितात्परेषामनुदात्तानामि"त्यनेन। इन्द्र। इदि परमैश्वर्ये इतिधातोः "ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामाला" इत्यनेन रन्प्रत्ययान्तत्वेन इन्द्रशब्दो निपातितः। तत्र धातोः स्वरस्य प्रत्ययस्वरस्तस्यापि निन्स्वर उपमर्दक इति निदन्तत्वादाद्युदात्त इन्द्रशब्दः। शेषनिघातेनान्त्यस्यानुदात्तत्वम्। तस्मात्संबोधने प्रथमाया एकवचने तस्य लोपे इन्द्रेत्यस्य संबोधनप्रथमान्तत्वेन "सामन्त्रितमि"त्यामन्त्रितसञ्ज्ञकत्वाद् "पदस्य पदात् अनुदात्तं सर्वमपादादावि"त्यधिकारस्थेन "आमन्त्रितस्य चे"त्यनेन सर्वानुदात्तत्वम्। तच्च पदपाठे स्पष्टं दृश्यते। संहितायां तु सोमासःशब्दीयमकारात्स्वरितात्परत्वादिन्द्रशब्दीयानुदात्तयोर्द्वयोरपि "स्वरितात्परेषामनुदात्तानामि"ति सूत्रेण प्रचितापरपर्यायैकश्रुत्यम्। गिर्वणः। गॄ शब्देऽस्मात्क्विपि "ऋत इद्धातो" रिति इत्वे रपरत्वे गिर् शब्दः। तदुपपदात् वन् धातोः "सर्वधातुभ्योऽसुनि" त्यौणादिकेन असुनि प्रत्यये गिर्वणस् शब्दः सञ्ज्ञात्वाण्णत्वेन। तस्य सम्बोधन एकवचनं गिर्वण इति। देवराजयज्वा तु गीःशब्दोपपदाद्वनोतेर्ण्यन्तादसुनि घटादित्वेन मित्त्वादुपधाह्रस्वे गिरो दीर्घस्य छान्दसत्वादभावे गिर्वण.शब्द इति वनु याचने इत्यस्मादुक्तशब्दसिद्धिमाह। निरुक्तकारेणापि गीर्भिरेनं वनयन्तीत्यर्थं ब्रुवता णिजन्ताद्वनुधातोरेवोक्तशब्दसिद्धिरत्र भण्यते। स्कन्दस्वाम्यप्येवमेव। श्रीनिवासस्तु उक्तधातोः स्वार्थे णिचमाह। तत्र गीःशब्दे धातोरितिस्वरेणान्तोदात्तता। वन्धातोरसुन् कल्पे धातोः स्वरः प्रत्ययाद्युदात्तस्वरेण सोऽपि प्रत्ययगतनित्त्वनिबन्धनेनोपमर्द्यत इति निदन्तादिरुदात्तः। गिर्वणस्शब्दस्य समासे "समासस्ये"त्यन्तोदात्तं बाधित्वा कृदुत्तर-

अष्टमीमृचमाह :—

त्वां स्तोमा अवीवृधन्त्वामुक्था शतक्रतो ॥
त्वां वर्धन्तु नो गिरः ॥ ८ ॥

त्वाम् । स्तोमाः । अवीवृधन् । त्वाम् । उक्था ।
शतक्रतो इति शतऽक्रतो ॥
त्वाम् । वर्धन्तु । नः । गिरः ॥ ८ ॥

पदप्रकृतिस्वरत्वेन वणम् शब्दीयाद्याकारस्योदात्तत्वे प्राप्ते "लघावन्ते द्वयोश्च बह्वषो गुरुरि"त्यनेन सयोगपरत्वेन गुरुसञ्ज्ञकस्य गीतिगकारोत्तरेकारस्योदात्तत्वम् । णिजन्ताद्वनधातोरसुनपक्षेऽपि पूर्ववदेव स्वरः । एवं च गिर्वणःशब्दस्याद्युदात्तत्वे प्राप्ते प्रकृतेऽस्य सम्बोधनान्तत्वेनामन्त्रितसञ्ज्ञावत्त्वेन पदात्परत्वादपादादिस्थितत्वेनाष्टमिकेन "आमन्त्रितस्य च"त्यनेन सर्वानुदात्तत्व पदपाठे । संहितायां तु सोमास शब्दीयमाकाररूपस्वरितात्परत्वात्प्रचयस्वरः सर्वेषामचाम् । शम् । निपातत्वा"न्निपाता आद्युदात्ता" इत्यनेनादिरुदात्त । शमुधातोः विनिप्रत्यये शम् इति देवराजयज्वा । तत्र धातुस्वरेणान्तोदात्तत्वम् । ते । "अनुदात्त सर्व मपादादावि"त्यधिकारे "तेमयावेकवचनस्ये"ति सूत्रेण युष्मच्छब्दस्य षष्ठ्येकवचनान्तस्य स्थानेऽनुदात्तं आदेशः । तस्य संहितायां शंशब्दीयोदात्तात्परत्वा- "दुदात्तादनुदात्तस्य स्वरित" इत्यनेन स्वरितः । सन्तु । अस् भुवि इति आदादिकाद्धातोर्लोटि प्रत्यये तस्य स्थाने प्रथमपुरुषबहुवचने परस्मैपदे झि आदेशे तदवयवझकारस्य 'झोऽन्त' इत्यनेनान्तादेशे "एरु"रितिसूत्रेण झेरिकारस्योकारे मध्ये शपि तस्या'दिप्रभृतिभ्यःशप" इति शपो लुकि अस्धातोरकारस्य "श्नसोरल्लोप" इत्यनेन लोपे सन्तु इति पदं सिध्यति । तत्र प्रत्ययाद्युदात्तस्वरेण सन्तुशब्दे सकारोत्तरवर्त्यकारस्योदात्तत्वे शेषनिघातेनान्त्यस्येकारस्यानुदात्तत्वे स्थानिवत्त्वेन तत्स्थानिकस्योकारस्यापि अनुदात्तत्वे सन्तु शब्द आद्युदात्तः प्राप्तः परन्तु प्रकृते तस्यात्रातिङन्तपदात्परत्वेन "तिङ्ङतिङ" इत्यनेन सर्वानुदात्तत्वम् । संहितायां तेशब्दात्स्वरितात्परत्वात् सन्तुशब्दीय आदिरकारः प्रचितः स्वरितात्परेषामनुदात्तानामित्यनेन । द्वितीयस्यापि उक्तसूत्रेण स्वरितात्परत्वात्प्रचिते प्राप्ते तदपवादकेन उदात्तस्वरितपरस्य सन्नतर इत्यनेनानुदात्तापरपर्यायः सन्नतरो विधीयते उदात्तस्य प्रशब्दीयाकारस्य परत्वात् । प्रचेतसे । प्रशब्दो निपातत्वाद्वा उपसर्गाश्चाभिवर्जमिति वोदात्तः । चिती सञ्ज्ञाने इत्यस्माद्धातोः सर्वधातुभ्योऽसुनिति सूत्रेणासुन्प्रत्यये उपधाया गुणे चेतः शब्दः । तत्र धातोरितिस्वरस्य प्रत्ययसामान्यनिमित्तकेनाद्युदात्तश्चेत्यनेनोपमर्द, तस्यापि प्रत्ययगतनित्त्वनिबन्धनेन ञ्नित्यादिर्नित्यमित्यनेनोपमर्दात्प्रकृते नित्त्वनिमित्तकेन निदन्तादेरुदात्तत्वरूपेण चेतः शब्द आद्युदात्तः । ततः प्रचेतः शब्दयोर्बहुव्रीहिसमासे समासस्येत्यन्तोदात्तत्वस्यापवादकेन "बहुव्रीहौ प्रकृत्या पूर्वपदमि"त्यनेन पूर्वपदस्य प्रेत्यस्य प्रकृतिस्वरकत्वे प्रचेतः शब्द आदिरुदात्तः । ततश्चतुर्थ्येकवचनङेप्रत्ययस्य सुप्त्वेन अनुदात्तत्वमिति प्रचेतसे शब्दे आदिरुदात्तः शेषनिघातेन ततः परे सर्वेऽनुदात्ताः । तत्रापि द्वितीयस्य प्रथमादुदात्तात्परत्वात्स्वरित उदात्तादनुदात्तस्य स्वरित इत्यनेन । तृतीयचतुर्थयोस्तु स्वरितात्परत्वात्प्रचयः स्वरितात्परेषामनुदात्तानामित्यनेन ।

हे शतक्रतो = बहुकर्मन्बहुप्रज्ञ वेन्द्र त्वां स्तोमाः = सामगानां स्तोत्राणि अवीवृधन् = वर्धितवन्ति। तथा बह्वृचानामुक्था = शस्त्राणि त्वामवीवृधन्। यस्मात्पूर्वमेवमासीत्तस्मादिदानीमपि नोऽस्माकं गिरः स्तुतयस्त्वां वर्धन्तु = वर्धयन्तु। अतिवृद्धं कुर्वन्तु॥

स्तोमाः। मनो नित्त्वादाद्युदात्तः। अवीवृधन्। "वृधु वृद्धौ" ण्यन्तात् लुङि चङि "उर्ऋत्" (पा० ७।४।७) इति वृधेरुपधाया ऋकारस्य ऋकारविधानादन्तरङ्गोऽपि गुणो बाध्यते। द्विर्भावः। हलादिःशेषः, सन्वद्भावः, इत्वदीर्घत्वाडागमाः। उक्था। उक्थानि। "पातॄतुदिवचिरिचिसिचिभ्यस्थक्" (उ० २।७) इति थक्प्रत्ययः। तस्य कित्त्वात्संप्रसारणम्। "शेश्छन्दसि बहुलम्" (पा० ६।१।७०) इति शिलोपो नलोपश्च। प्रत्ययस्वरेणान्तोदात्तः। असामर्थ्यादामन्त्रितपरस्यापि न पराङ्गवद्भाव इति नाद्युदात्तत्वम्। वर्धन्तु। अन्तर्भावितण्यर्थाद् वृधेर्व्यत्ययेन परस्मैपदम्॥८॥*

त्वां स्तोमा·

·त्वाम्। मौत्राद्युपधातो"युष्यसिभ्यां मदिग्" इति औणादिकेन सूत्रेण मदिक्प्रत्यये कित्त्वादुपधागुणाभावे युष्मद् शब्दः। तस्माद् द्वितीयैकवचनेऽमि प्रत्यये तस्य"ङेप्रथमयोरमि"—त्यमादेशे युष्मच्छब्दीयमपर्यन्तभागस्य स्थाने 'त्वमावेकवचने' इति त्वादेशे मपर्यन्ताच्छेषभागस्य "शेषे लोप" इति लोपप्राप्तौ तदपवादेन"द्वितीयायां च" इति सूत्रेण युष्मच्छब्दस्याकारान्तादेश उच्यमानो"ऽलोऽन्त्यस्ये" त्यनेनान्त्यदकारस्थाने प्रवृत्तो भवति। ततः त्व + अ + आ। अम् इत्यत्र प्रथम "मतो गुणे" इति पररूपैकादेशे तत आकारेण सवर्णदीर्घे ततोऽमा प्रत्ययेन "अमिपूर्व" इति पूर्वरूपैकादेशे त्वामितिरूपं सिध्यति। तत्र"धातो"रि त्यनेन युपधातोरन्त्यस्योदात्तः प्राप्तः, "आद्युदात्तश्चे" त्यनेन मदिकः प्रत्ययस्यादेरुदात्तः प्राप्तस्तत्र"सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य" इत्यनेन पश्चाच्छ्रियमाणस्य स्वरस्य बलवत्त्वबोधनात् स्वरविषये च येन क्रमेण शब्दप्रादुर्भावस्तेन क्रमेण स्वरप्रवृत्तिरिति स्वीकारेण धातुरूपप्रकृतेरूर्ध्वं प्रत्ययाभिव्यक्त्या तदीयस्वरस्यापि पश्चात्प्राप्तप्रोक्तवार्तिकेन तस्य सति शिष्टत्वाद्बलवत्त्वबोधनं, ततस्तेन बलीयसा "अनुदात्तं पदमेकवर्जमि"ति परिभाषासहकारेण धातोः स्वरस्य निवृत्तिपूर्वमनुदात्तत्वसंपादनेन युष्मद् शब्दोऽन्तोदात्तः। उणादीनामव्युत्पन्नत्वमिति मते तु"फिषोऽन्त उदात्त" इत्येतेनान्तस्योदात्तत्व युष्मच्छब्दस्येति बोध्यम्। ततः शेषनिघातेन युकारस्यानुदात्तत्वात्तत्स्थाने जातस्य त्वादेशस्याप्यनुदात्तत्व स्थानिवत्त्वात्। ततो मपर्यन्तादवशिष्टाद्भागीयाकारस्योदात्तत्वेन तेन सह त्वादेशीयानुदात्ताकारस्य पररूपैकादेशस्यानुदात्तत्वशब्दाकारोदात्ताद् शब्दाकाररूपानुदात्तोदात्तोभयस्थानिकत्वेऽपि तस्योदात्तस्थानिकत्वमात्रेण "एकादेश उदात्तेनोदात्त" इत्युदात्तत्वम्। ततो दकारस्थानिकस्य आकारस्य व्यञ्जनस्थानिकतया व्यञ्जनस्य च "व्यञ्जनमनुदात्तमि"त्यनुदात्तत्वविधानेन स्थानिवत्त्वेनानुदात्तत्वम्। तेन सह पूर्वस्य पररूपनिष्पन्नस्योदात्ताकारस्य सवर्णदीर्घैकादेशेऽत्रापि पूर्ववदुदात्तानुदात्तोभयस्थानिकत्वेऽपि उदात्तस्थानिकत्वेनैकादेशस्योदात्तत्वम्। अमः प्रत्ययस्य सुप्त्वे"नानुदात्तौ सुप्पितौ" इत्यनेनानुदात्तत्वात्तत्स्थानिकस्यामादेशस्यापि स्थानिवत्त्वेन सुप्त्वेनानुदात्तत्वम्। ततः पूर्वेण सवर्णदीर्घीयोदात्ताकारेणास्य मकारस्य पूर्ववदेवोदात्तस्थानिकत्वेनोदात्तत्वमिति

स्क०—त्वां स्तोमाः स्तोत्राणि अस्मदीयाः दातृप्रयुक्तानि अवीवृधन् वर्द्धितवन्तः। स्तूयमाना हि देवता वीर्येण वर्द्धन्ते। न च केवलाः स्तोमाः, त्वदीयान्युक्थान्यपि त्वां वर्द्धितवन्ति। हे शतक्रतो। उक्थशब्दस्तार्तीयसवनकहोत्रकशस्त्रविशेषवचनः। शस्त्रमात्रवचनो वा। त्वां वर्द्धन्तु वर्द्धयन्तु नोऽस्माकमपि स्वभूता गिरः स्तुतयः॥ ८॥

---

त्वांशब्दाकार उदात्तः। स्तोमाः। "ष्टुञ् स्तुतौ" इति धातोः 'अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिणीभ्यो मन्" इत्यौणादिकेन सूत्रेण मनि प्रत्यये तन्निमित्तकस्य धातूकारस्य गुणे स्तोमशब्दः। तस्मात्प्रथमाबहुवचने जसि "प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णदीर्घैकादेशे रुत्वे विसर्गे च स्तोमा इति रूपम्। तत्र धातोः स्वरः सतिशिष्टेन प्रत्ययस्वरेणाद्युदात्तश्चेत्यनेनोपमर्द्यते तस्यापि प्रत्ययगतनित्त्वनिमित्तकेन "ञ्नित्यादिर्नित्यमि"त्यनेन निवृत्तावेतेन निदन्तादेरुदात्तत्वं विधीयते तेन स्तोमशब्द आद्युदात्तः शेषनिघातेनान्यस्यानुदात्तत्वम् जसः सुप्त्वेनानुदात्तत्वे पूर्वेण स्तोमशब्दीयानुदात्तमकाराकारेण पूर्वसवर्णदीर्घे तस्योभयानुदात्तस्थानिकतया स्थानिवत्त्वेनानुदात्तत्वे तस्य पूर्वस्मात्स्तोशब्दीकारादुदात्तात्परत्वेन "उदात्तादनुदात्तस्य स्वरित" इति स्वरितः। अवीवृधन्। "वृधु वृद्धौ" इति धातो"र्हेतुमति च" इत्यनेन णिप्रत्ययः। "सनाद्यन्ता" इति णिजन्तस्य धातुत्वेन ततो भूते लुङि तत्स्थाने परस्मैपदे प्रथमपुरुषबहुवचने झिप्रत्यये तदवयवस्य "झोऽन्त" इत्यन्तादेशे "इतश्च" इतीकारस्य लोपः। लुङि परतो धातोः परस्माच्च्लौ तस्य स्थाने "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्" इत्यनेन चङि धातोः "लुङ्लङ्लृङ्क्ष्वडुदात्त" इत्यडागमे वृध् णिच् चङ् अन्त् इत्यत्र णिजिनिमित्तको धातोरुपधाया गुण प्राप्तोऽपि "उर्ऋत्" इति धातोरुपधाऋकारस्य स्थाने ऋकारबोधकेन बहिरङ्गेणापि निरवकाशत्वाद्बाध्यते न्यायात् ततो "णेरनिटी"त्यनेन णिचो लोपे"चङि" इत्यनेन धातोरेकाचो द्वित्वे अवृध् वृध् । अ अन्त् इत्यत्र द्वित्वजस्य पूर्वस्य रूपस्याभ्याससंज्ञायां "उरदि"त्यभ्यासऋकारस्यात्वे "उरण्रपर" इति रपरत्वे "हलादिःशेष" इत्येनेनाभ्यासधकारस्य लोपे "सन्वल्लघुनि चङ्परेऽनग्लोपे" इत्यनेन सन्वद्भावे "सन्यत" इत्यभ्यासाकारस्येत्वे"दीर्घो लघोरि"ति अभ्यासस्य लघोर्दीर्घत्वे अवीवृध् अ+अन्त् इत्यत्र "अतो गुणे" इति पररूपे "संयोगान्तस्य लोप"इतिअन्त्यस्य तकारस्य लोपे अवीवृधन् इतिरूपम्। तत्र धातोरित्यनेन धात्वन्तस्योदात्तः, चङ्झिप्रत्यययोस्तु आद्युदात्तत्वेनोदात्ततादेरिति त्रयाणामुदात्तत्वे प्राप्ते धातुस्वरं बाधित्वा सतिशिष्टत्वाज्झिप्रत्ययस्योदात्तत्वस्यावशेषे प्राप्ते "तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङो" रित्यनेन तस्यानुदात्तत्वे चङः स्वरस्यावशेषे प्राप्तेऽडागमस्यात्रोदात्तत्वबोधनेन सतिशिष्टत्वेन तस्यावशेषे प्राप्तेऽत्रास्य तिङन्तस्यातिङन्तपदात्परत्वा"त्तिङ्ङतिङ" इति सर्वानुदात्तत्वविधानात्सर्वानुदात्तमवीवृधन्पदम्। तत्र संहितायां स्तोमाःशब्दीयमाकारात्स्वरितात्परत्वात्सर्वेषां प्रचयस्वरकता। केवलमन्त्यस्य धन्शब्दीयधकाराकारस्य त्वांशब्दीयोदात्तः पर इति "उदात्तस्वरितपरस्य सन्नतर" इति सन्नतरापरपर्यायोऽनुदात्तः। त्वाम्। अस्य स्वरः पूर्ववत्। उक्था। वच परिभाषणे इत्यस्माद्धातोः "पातृतुदिवचिरिचिसिचिभ्यस्थक्" इत्यौणादिकेन सूत्रेण थकि प्रत्यये तस्य कित्त्वात् "वचिस्वपियजादीनां किति" इत्यनेन वकारस्य संप्रसारणेनौकारे परवर्तिनोऽकारस्य "संप्रसारणाच्चे"ति पूर्वरूपैकादेशे चकारस्य कुत्वे उक्थशब्दः। तस्मात्प्रथमाबहुवचने जसि तस्य स्थाने "जश्शसोः शिरि"ति इयादेशे तस्य "शिसर्वनामस्थानम्" इति सर्वनामस्थानसंज्ञकत्वात् "नपुंसकस्य झलच" इत्यनेन नुमागमे "सर्वनामस्थाने चासम्बुद्धौ" इति दीर्घे उक्थानीति पदं प्राप्तं परंतु "शेश्छन्दसि बहुलम्" इति शेर्लोपे "नलोपः प्रातिपदिकान्तस्ये"ति नकारलोपे "उक्था" इति पदम्। तत्र

वे०—त्वां त्रिवृदादयः स्तोमाः अवीवृधन् त्वां शस्त्राणि च शतकर्मन् त्वामेव च वर्द्धयन्त्वस्माकमपि गिरः ॥ ८ ॥

धातोः स्वरः प्रत्ययस्वरेण निवर्तित इति अन्तोदात्तत्वमुक्थशब्दस्य। शेषनिघातेन धातोः स्वरस्यानुदात्तत्वम् संप्रसारणोकारस्य वकारस्थानिकतया वकारस्य व्यञ्जनत्वेन व्यञ्जनस्य च "व्यञ्जनमनुदात्तम्" इत्यनुदात्तत्वविधानात्स्थानिवत्त्वेनानुदात्तत्वम्। ततः परवर्तिधातुवकाराकारोऽनुदात्तः पर इति तेन सह सम्प्रसारणोकारस्य पूर्वरूपैकादेशे उभयोरप्यनुदात्तत्वमित्यनुदात्तत्वमेव एकादेशस्य स्थानिवत्त्वात् जसः सुप्त्वा "दनुदात्तौ सुप्पिताविं" त्यनुदात्तत्वेन तत्स्थानिकश्यादेशस्यापि स्थानिवत्त्वेनानुदात्तत्वम्। तन्निमित्तकस्य उक्थशब्दीयान्त्याकारस्य सवर्णदर्घोऽपि उदात्तस्थानिक इति स्थानिवत्त्वेनोदात्त इति उक्थाशब्दोऽन्तोदात्त आद्यनुदात्तश्च। शतक्रतो। "पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतमि" ति सूत्रेण दशदशच्छब्दतः परिमाणाद्यर्थे तप्रत्ययो दशदशतोश्च शादेशो निपात्यते। कृञ् धातोश्च "कृञः क्रतुः" इत्यौणादिकेन सूत्रेण क्रतुप्रत्यये कित्त्वात् गुणाभावे यणि क्रतुशब्दः। तत उभयोर्बहुव्रीहौ समासे समासात्सम्बोधनैकवचने "सम्बुद्धौ चे" त्यनेन प्रातिपदिकान्त्यस्य गुणे संबोधनैकवचनलोपे शतक्रतोशब्दः। तत्र शतशब्दे प्रत्ययस्वरेणान्तोदात्तत्वम्। क्रतुशब्देऽपि प्रत्ययस्वरेणैवाद्युदात्तता। उभयोर्बहुव्रीहौ समासस्येत्यन्तस्योदात्तत्वे प्राप्ते तदपवादेन "बहुव्रीहौ प्रकृत्या पूर्वपदमि" ति पूर्वपदस्य प्रकृतिस्वरत्वेन शतक्रतुशब्दो द्वितीयोदात्तकः। अवशिष्टानां सर्वेणां शेषनिघातेनानुदात्तत्वम्। ततः सम्बोधने परतो जातस्य गुणौकारस्य स्थानिवत्त्वेनानुदात्तत्वम्। इतिपदपरतादशायां द्वितीयोदात्तकत्वे प्राप्ते पदात्परत्वादपादादौ वर्तमानत्वात् "आमन्त्रितस्य च" इत्याष्टमिकेन सूत्रेण सर्वानुदात्तत्वम्। संहितायां तु उक्थाशब्दीयोदात्तात्परत्वाच्छतक्रतोशब्दीयप्रथमस्य स्वरितत्वम् 'उदात्तादनुदात्तस्य स्वरित" इत्यनेन परवर्तिनां त्रयाणामप्यचां स्वरितात्परत्वात्प्रचयः। त्वाम्। अस्य स्वरः पूर्ववत्। वर्धन्तु। वृधु वृद्धाविति धातोर्लोटि तत्स्थाने प्रथमपुरुषबहुवचनत्वेन वृधुधातोरनुदात्तत्वेनात्मनेपदित्वादात्मनेपदप्रत्यये प्राप्ते व्यत्ययेन परस्मैपदे झौ तस्य झकारस्य "झोऽन्त" इत्यादेशे "एरुरि" तीकारस्योकारे मध्ये शपि "पुगन्तलघूपधस्य चे" ति धातूपधाया गुणे वर्द्ध + अन्तु इत्यतातो गुणे इति पररूपे वर्द्धन्तु इति रूपम्। तत्र धातोरन्तस्योदात्तत्वं पदे प्रत्ययादिस्वरेणाबाधनात्प्राप्तं ततः शपः पित्त्वादनुदात्तत्वम्, झेः प्रत्ययस्य प्रत्ययत्वादाद्युदात्तश्चेति आदिरुदात्तः प्राप्तः परन्त्वत्रादुपदेशात्तस्य परत्वेन "तास्यनुदात्तेन्ङिदुपदेशाल्लसार्वधातुकमनुदात्तमि" त्यनेनानुदात्तत्वम्। इकारस्योकारोऽपि स्थानिवत्त्वेनानुदात्तः। एवं च वर्द्धन्तुपदे आद्युदात्ते प्राप्तेऽत्रातिङन्तपदात्परत्वा- 'त्तिङ्ङतिङ" इति सर्वानुदात्तत्वम्। तत्र आद्यस्य वकाराकारस्य त्वांशब्दीयोदात्ताकारात्परत्वा "दुदात्तादनुदात्तस्य स्वरित" इत्यनेन स्वरितो द्वितीयतृतीययोस्तु स्वरितात्परत्वात्प्रचितत्वम्। नः। "अनुदात्तं सर्वमपादादौ" इत्यधिकारीयेण "बहुवचनस्य वस्नसौ" इति सूत्रेण षष्ठीबहुचनान्तास्मच्छब्दस्य स्थाने नसादेशोऽनुदात्तो विधीयत इति अनुदात्तः। तस्य सहितायां गिरःशब्दीयो गकारः पर इति सकारस्य रुत्वे उत्वे गुणे नो इति रूपम्। तत्रापि उत्वस्य व्यञ्जनस्थानिकतया गुणस्योभयानुदात्तस्थानिकतयाऽनुदात्तत्वम्। तस्योदात्तः पर इति सन्नतरः। गिरः। गॄ निगरणे इत्यस्मात्क्विप्चेति क्विपि ऋत इद्धातोरिति धातोर्ऋकारस्येत्वे रपरत्वे गिर्शब्दः। तस्मात् प्रथमाबहुवचने जसि गिर इति रूपम्। तत्र "धातोरि" ति सूत्रेण धातो ऋकार उदात्तः। तत्स्थानिकस्येत्वस्य स्थानिवत्त्वेनोदात्तत्वम्। जसः प्रत्ययत्वेनाद्युदात्तत्वे प्राप्ते तदपवादकेन "अनुदात्तौ सुप्पितौ" इति सूत्रेणानुदात्तत्वेन गिरः शब्द आदिरुदात्तोऽन्तोऽनुदात्तः। तस्यचोदात्तात्परत्वादुदात्तादनुदात्तस्य स्वरित इति स्वरित इति बोध्यम्।

नवमीमृचमाह :

अक्षितोतिः सनेदिमं वाजमिन्द्रः सहस्रिणम् ॥
यस्मिन्विश्वानि पौंस्या ॥ ९ ॥

अक्षितऽऊतिः । सनेत् । इमम् । वाजम् । इन्द्रः । सहस्रिणम् ॥
यस्मिन् । विश्वानि । पौंस्या ॥ ९ ॥

इन्द्र इमं वाजम् सोमरूपमन्नं सनेत् संभजेत्। कीदृश इन्द्रः? अक्षितोतिः अहिंसितरक्षणः। कदाचिदपि रक्षां न विमुञ्चतीत्यर्थः। कीदृशं वाजम्? सहस्रिणम्। प्रकृतौ विकृतिषु च प्रवर्तमानत्वेन सहस्रसंख्यायुक्तम्। यस्मिन्वाजे विश्वानि सर्वाणि पौंस्या पुंस्त्वानि बलानि वर्तन्ते तादृशं वाजमिति पूर्वत्रान्वयः॥

अक्षितोतिः। ननु क्षि क्षय इत्ययं धातुरकर्मकः। तस्य च कर्माभावादधिकरणे भावे कर्तरि वा क्तप्रत्ययेन भवितव्यम्। तदिह यदि कर्तर्यधिकरणे वा स्यात्तदा तयोरर्थयोर्ण्यत्प्रत्ययस्याविधानात् "क्षिय" इत्यनुवृत्तौ (पा० ६।४।५९) "निष्ठायामण्यदर्थे" (पा० ६।४।६०) इति निष्ठानत्वेऽक्षीणोतिं स्यात् न त्वक्षितोतिः। अथ "नपुंसके भावे क्तः" (पा० ३।३।११४) इति भावपरः क्षितशब्दो गृह्यते। तदा तस्य ण्यदर्थत्वेन "अण्यदर्थे" इति निषेधाद्दीर्घनत्वयोरभावात् क्षितमिति सिध्यति। तदा तु नञ्तत्पुरुषः प्रकृतेन नान्वेतीति न विद्यते क्षितमत्रेति बहुव्रीहिणैव भवितव्यम्। तथा च "नञ्सुभ्याम्" (पा० ६।२।१७२) इत्युत्तरपदान्तोदात्तत्वं स्यात्। पुनरूतिशब्देन बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन स एव स्वरोऽस्त्विति चेदिष्टमभिमतमाद्युदात्तत्वं न सिध्येदिति। सत्यम्। अत एवात्र क्षिधातुरन्तर्भावितण्यर्थो गृह्यते। तेन सकर्मकत्वात्कर्मण्येषा निष्ठा। ततश्च "अण्यदर्थे" (पा० ६।४।६०) इति निषेधाद्दीर्घो निष्ठानत्वं च न भविष्यति। तथा च नञ्तत्पुरुषे न क्षितोऽक्षितोऽक्षयितेत्यर्थः। तत्र चाव्ययपूर्वपदप्रकृतिस्वरत्वेन नञ उदात्तत्वम्। पुनरूतिपदेन बहुव्रीहौ स एव स्वरः स्थास्यतीति न कोऽपि दोषः। "रिक्षिचिरिजिरिदाशद्र जिघांसायाम्" इति क्षिणोतेर्हिंसार्थस्य वा कर्मणि निष्ठा। तथा चाहिंसितोतिरित्यर्थ उक्तक्रमेण स्वरः सिध्यतीति न दोषः। सनेत्। "वन षण संभक्तौ"। भौवादिकः। वाजम्। वृषादित्वादाद्युदात्तः। इन्द्रः। रनो नित्त्वादाद्युदात्तः। सहस्रिणम्। सहस्रमस्यास्ति। "अत इनिठनौ"। (पा० ५।२।११५) प्रत्ययस्वरः। विश्वानि। "विशेः

कनि" (उ० १।१५०) नित्त्वादाद्युदात्तः। पुंसः कर्माणि पौंस्यानि। ब्राह्मणादेराकृतिगणत्वाद् "गुणवचनब्राह्मणादिभ्यः कर्मणि च" (पा० ५।१।१२४) इति ष्यञ्। ञित्त्वादाद्युदात्तः। प्रथमाबहुवचनस्य "सुपां सुलुग्" (पा० ७।१।३९) इत्यादिना डादेशः। ननु "स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्" (पा० ४।१।८७) इत्यनेन "धान्यानां भवने क्षेत्रे खञ्" (पा० ५।२।१) इत्येतत्पर्यन्तेष्वपत्याद्यर्थेषु नञ्स्नञोर्विधानाद्यथा पुंसोऽपत्यं पौंस्नः, पुंस आगतः पौंस्न इत्यादिवत्पुंसो भावः कर्म वेत्यस्मिन्नप्यर्थे ष्यञं बाधित्वा पौंस्नानीत्येव भवितव्यम्। कथमुच्यते पौंस्यानीति? उच्यते। "आ च त्वात्" (पा० ५।१।१२०) इति सूत्रे त्वादित्यवधिनिर्देशाद् "ब्रह्मणस्त्वः" (पा० ५।१।१३६) इत्येतत्पर्यन्तैरिमनिजादिभिः प्रत्ययैः सह त्वतलोः समावेशः। एवं तत्रैव चशब्दान्नञ्स्नञोरपि ष्यञादिभिः समावेश एव। न बाध्यबाधकभावः ॥ ९ ॥

अक्षितोति

अक्षितोति। क्षि क्षये इत्यस्माद्धातोरन्तर्भावितण्यर्थात् निष्ठाक्तप्रत्यये क्षितशब्दः। अत्र निष्ठायामण्यदर्थे इति सूत्रेण विहितो दीर्घस्तु न प्रवर्ततेऽण्यदर्थे इति ण्यदर्थस्य पर्युदासात्। अतएव दीर्घाभावेन क्षियो दीर्घादिति निष्ठाया न नत्वम्। दीर्घाभावात्। ततः क्षितशब्दस्य सिद्धिः। रिक्षिचिरिजिरिदाशदृहिमायामित्यत्र पठितात्क्षिधातोर्निष्ठाप्रत्यये क्षितशब्दः। तस्य नञा समासेऽक्षितशब्दः। ततस्त्रियां टापि सवर्णदीर्घेऽक्षिताशब्दः। अवतेर्धातोः "ऊतियूतिजूतिसातिहेतिकीर्तयश्चे"ति सूत्रेण क्तिन् प्रत्ययः सम्प्रसारणमुपधावकारयोरूठ्, इडागमाभावोऽन्तोदात्तत्वं निपात्यते ऊतीति। तथाच अवतेर्धातोरित्यन्तोदात्तत्वस्य क्तिन् प्रत्ययाद्युदात्तत्वस्य ऊतिशब्दे निदन्ताद्युदात्तत्वस्य चाप्राप्तिः। निपातनेन सर्वेषामुपमर्देनान्तोदात्तत्वस्य विधानात्। ततः पूर्वेणाक्षिताशब्देनोतिशब्दस्य बहुव्रीहिः। तेनाक्षितोतिरितिपदं सिध्यति। तत्र क्षितेत्यत्र धातोरित्यनेन धात्वन्त उदात्तः। क्तप्रत्ययस्य आद्युदात्तश्चेत्यनेनादिरुदात्तः। ततः सति शिष्टत्वेन प्रत्ययस्वरेण प्रकृतिस्वरस्य निवर्तनात्क्षितशब्दोऽन्तोदात्तः। धातुस्वरस्य शेषनिघातेन अनुदात्तत्वम्। ततो नञा तत्पुरुषसमासे नञो निपातत्वेनाद्युदात्तत्वं क्षितशब्दस्य चान्तोदात्तत्वं बाधित्वा समासस्येत्यनेनाक्षितशब्देऽन्तोदात्तत्वे प्राप्ते तस्यापि प्रकृते "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्या" इत्यनेनाव्ययस्य पूर्वपदस्य प्रकृतिस्वरकत्वस्य तत्पुरुषबोधकेन बाधादत्राव्ययपूर्वपदप्रकृतिस्वरकत्वे नञ उदात्तत्वं तिष्ठति क्षितशब्दस्तु सर्वानुदात्तः शेषनिघातेन। ततष्टापि टापः पित्त्वेनानुदात्तौ सुप्पितावित्यनेनानुदात्तत्वात्तस्य क्षितशब्दीयान्त्यानुदात्ताकारेण सवर्णदीर्घे दीर्घस्याप्यनुदात्तोभयस्थानिकतया स्थानिवत्त्वेनानुदात्तत्वम्। अस्मिन् पक्षे पदपाठो विरुध्यते। तत्र अक्षितऽऊतिरिति पूर्वस्य पदस्यानाबन्तत्वात्। तथा सति तत्र पुंवद्भावेन तदप्रदर्शनं सामान्येनाक्षितशब्देन वोतिशब्दस्य बहुव्रीहिर्बोध्यः। एव चात्र कल्पे टाबादेरप्रसक्त्या तत्स्वरविचारः परित्याज्यः। ऊतिशब्देन बहुव्रीहौ अक्षितोतिशब्दे समासत्वात्समासस्येत्यनेनान्तस्योदात्तत्वे प्राप्ते तस्यापवादेन "बहुव्रीहौ प्रकृत्या पूर्वपदमि"त्यनेन पूर्वपदस्य प्रकृतिस्वरकत्वविधानादत्र पूर्वस्य पदस्याक्षितेति शब्दस्य बहुव्रीहिसमासाप्रवेशे यः स्वर आद्युदात्तत्वरूपः स बहुव्रीहिसमासेऽपि प्रवर्तत इति अक्षितोति-

स्क०—अक्षिता अन्येनाहिंसिता अक्षीणा वा ऊतिः पालनं यस्य सोऽक्षितोतिः। सनेत् संभजतु इमं वाजं संग्राममिन्द्रः सहस्रिणं योद्धृसहस्रयुतम्। अस्मिन्संग्रामेऽस्मद्रक्षणाय सन्निहितो भवत्वित्यर्थः। यस्मिन् संग्रामे। किम्? उच्यते, विश्वानि सर्वाणि पौंस्या। बलनामैतत्। हस्त्यश्वरथपदातिलक्षणानि बलानि। अथवा वाज इत्यन्ननाम। इदमस्मदीयं

शब्दोऽप्याद्युदात्तः सपद्यते। परेषां तु शेषनिघातेनानुदात्तता। तत्र द्वितीयस्य प्रथमादुदात्तात्परत्वात्स्वरित "उदात्तादनुदात्तस्य स्वरित" इत्यनेन। तृतीयचतुर्थयोस्तु स्वरितात्परत्वात्प्रचितः स्वरितात्परेषामनुदात्तानामित्यनेन। क्षिधातोर्हिंसार्थात्क्षितशब्दसाधनकल्पेऽपि पूर्वोक्तैव प्रक्रिया बोद्धव्या। सनेत्। वनषण संभक्तावित्यत्र पठितात्सनधातोर्भौवादिकाल्लिङि प्रथमपुरुषैकवचने परस्मैपदे तिपि "इतश्चे"ति तदिकारलोपे मध्ये शपि सन् अत् इत्यत्र यासुडागमे तस्य अतो येय इतीयादेशे "लोपो व्योर्वली"ति यकारलोपे पूर्वेणाकारेण गुणे सनेदिति रूपम्। तत्र धातोः स्वरस्य धातोरिति धात्वन्तोदात्तस्यावशेषः प्राप्तः। यतः शपः पित्त्वादेव तिपोऽपि पित्त्वादनुदात्तौ सुप्पितावित्यनेनानुदात्तत्वात् तथापि तं बाधित्वा विशेषविहितेन यासुट उदात्तत्वेन स धातुस्वरो निवर्त्यते। अतएव यासुट आगमत्वेऽपि "आगमा अनुदात्ता" इत्यपि नात्र प्रवर्तते। एवं च यासुट उदात्तत्वात्तत्स्थानिकेयादेशस्याप्युदात्तत्वं स्थानिवत्त्वात्, तेन सह पूर्वस्य शबकारस्य गुणरूपैकादेशस्यापि उदात्तस्थानिकतयोदात्तत्वेन सनेच्छब्दोऽन्तोदात्तः शेषनिघातेनाद्युदात्तः प्राप्तः परन्तु प्रकृतेऽतिङन्तपदात्परत्वादपादादिस्थत्वात्तस्य "तिङ्ङतिङ" इत्यनेन सर्वनिघातेन सनेदिति पदे स्वरद्वयमप्यनुदात्तम्। संहितायां तु पूर्ववर्त्यक्षितोतिपदीयक्षिरूपस्वरितात्परत्वेन "स्वरितात्परेषामनुदात्तानामि"त्यनेन द्वयोरपि स्वरयोः प्रचितत्वम्। इमम्। इदि परमैश्वर्ये इति धातोः "इन्देः कमिर्नलोपश्च" इत्यौणादिकेन सूत्रेण कमिप्रत्यये नलोपे च इदंशब्दः। भोजदेवमते इणो दमुक् प्रत्ययः। इन्धेर्वा कमिन्नलोपो बाहुलकाद्धकारस्य दकारः तस्माद्द्वितीयैकवचनेऽमि त्यदाद्यत्वे पररूपे दकारस्य मकारे इममिति रूपम्। तत्र धातुस्वरं बाधित्वा प्रत्ययस्वर इति इदंशब्दोऽन्तोदात्तः। अमः सुप्त्वात् त्यदाद्यत्वस्य व्यञ्जनस्थानिकत्वादनुदात्तत्वम् पररूपैकादेशस्य उदात्तानुदात्तस्थानिकत्वेनोदात्तस्थानिकत्वनिबन्धन "एकादेश उदात्तेनोदात्त" इति उदात्तः। शेषनिघातेनाद्यस्यानुदात्तत्वमितीमंशब्दे आदिरनुदात्तो द्वितीय उदात्तः। वाजम्। वज धातोर्गत्यर्थाद्घञि ञित्त्वादुपधावृद्धौ बाहुलकात् कुत्वाभावे वाजशब्दः। माधवस्तु प्रेरणार्थाद्वाजयतेर्वाज इत्याह। एवं च तत्पक्षे वाधातोर्गत्यर्थत्वदशायामपि वो विधूनने जुगिति जुगागमो बोध्यम्। तत्र धातुस्वरं बाधित्वा घञः प्रत्ययस्य "आद्युदात्तश्चे"ति प्रत्ययसामान्यनिबन्धन आद्युदात्तः प्राप्तस्तं बाधित्वा घञ्गतञित्त्वनिबन्धनो ञ्नित्यादिर्नित्यमिति ञिदन्तस्यादिरुदात्त इति ञिदन्तादेरुदात्तः प्राप्तस्तमपि बाधित्वा "कर्षात्वतो घञोऽन्त उदात्तः" इति घञन्तत्वात्तस्योदात्तता प्राप्ता तामपि वृषादित्वनिबन्धनो वृषादीनां चेत्यादेरुदात्तो बाधते इति वाजशब्दः प्रकृते आद्युदात्तः। वृषादेराकृतिगणत्वेन तद्गणपाठे वाजशब्दस्यान्वेषणश्रमो नापेक्ष्यते। ततश्च तस्मादाद्युदात्ताद्वाजशब्दाद् द्वितीयैकवचनेऽमिप्रत्ययेऽमि पूर्वं इति पूर्वं रूपैकादेशे वाजमिति पदं तत्रामः सुप्त्वादनुदात्तत्वमेकादेशस्य तु स्थानिवत्त्वादनुदात्तत्वमिति वाजंशब्दोऽपि आद्युदात्त एव। तस्य संहितायामिन्द्रशब्दीय उदात्तः पर इति वाजशब्दान्त्यस्य शेषनिघातेनानुदात्तस्य पूर्ववर्तिपदीयोदात्तात्परत्वेन प्राप्तः स्वरितो न भवति किंतु उदात्तस्वरितपरस्य सन्नतर इत्यनेनानुदात्तरूपस्सन्नतरो भवति। पदपाठे तु उदात्तात्परत्वात्स्वरित एव। इन्द्रः। इदि परमैश्वर्ये इतिधातोर्ऋज्रेन्द्राग्रेत्याद्यौणादिकसूत्रेण रन्प्रत्ययान्तत्वेनेन्द्रशब्दो निपातितः। तस्य

सोमलक्षणमन्नं सम्भजेत्पिबेत् इन्द्रः स्तुतिसहस्रयुक्तं यस्मिन् बलानि सर्वाणि सामर्थ्यलक्षणानि। वाजः पीतः सर्वसामर्थ्यानि जनयतीत्यर्थः। अथवा यस्मिन्विश्वानि पौंस्येति इन्द्रविशेषणम्। यस्मिन्निन्द्रे सर्वाणि बलानि, यः सर्वैर्बलैर्बलवान् महाबल इत्यर्थः ॥ ६ ॥

वे०—अक्षीणरक्षणोऽपि भजेतानेकपुरुषयुक्तमिमं संग्रामं यस्मिन्सर्वाणि बलानि प्रादुर्भवन्ति ॥ ६ ॥

प्रथमैकवचने सौ रुत्वविसर्गयोरिन्द्र इति पदम् । तत्र धातोः स्वरं बाधित्वा प्रत्ययसामान्यस्वरः प्राप्तस्तस्यापि प्रत्ययगतनित्त्वनिबन्धनेन ञ्नित्यादिर्नित्यमिति नित्स्वरेण निवृत्तौ तदन्तादिरुदात्त इति इन्द्रशब्द आद्युदात्तः। ततः शेषनिघातेनान्त्योऽनुदात्तस्तस्य पूर्ववत्त्युदात्तात्परत्वात्स्वरित उदात्तादनुदात्तस्य स्वरित इति सूत्रेण। सहस्रिणम्। षह अभिमर्षणे इत्यस्माद्धातूनामनेकार्थत्वादभिभवार्थे वर्तमानात्सर्वधातुभ्योऽसुनित्यौणादिकेनासुन्प्रत्यये सहश्शब्द·। तस्मान्मत्वर्थे रेप्रत्यये बाहुलकाद्रुत्वाद्यभावे सहस्रशब्दः। तस्मादत इनिठनाविति इनि प्रत्यये सहस्रिशब्दः। तस्माद्द्वितीयैकवचनेऽमि सहस्रिणमिति णत्वे रूपम्। तत्र सहश्शब्दे धातोरित्यनेन धातोरन्त उदात्तः, “आद्युदात्तश्चे”त्यनेन प्रत्ययस्यादिरुदात्त· प्राप्तः। तत्र सति शिष्टत्वेन ‘सतिशिष्टस्वरबलीयस्त्वमन्यत्रविकरणेभ्य” इत्यनेन प्रत्ययस्वरस्य बलवत्त्वेन दुर्बलस्य धातुस्वरस्य “अनुदात्तं पदमेकवर्जमि ति सूत्रसहायेन निवृत्त्या अनुदात्तत्वं प्राप्त धातुस्वरस्य तथापि प्रकृते प्रत्ययस्वरोपमर्दकेन प्रत्ययगतनित्त्वनिबन्धनेन ञ्नित्यादिर्नित्यमिति नित्स्वरेण प्रत्ययस्वरमुपमर्द्य निदन्तादेरुदात्तत्वबोधनान्निदन्तस्य सह·शब्दस्यादिरुदात्तः शेषनिघातेनान्त्योऽनुदात्तः। ततो मत्वर्थीये रे प्रत्यये रप्रत्ययस्वरेण सह·शब्दीयस्वरस्य सतिशिष्टत्वान्निवृत्त्या सहस्रशब्दोऽन्तोदात्त· प्राप्तः। परन्तु “लघावन्ते द्वयोश्च बह्वषो गुरुः” इति फिट्सूत्रेण सहस्रशब्दस्य संयोगपरत्वेन गुरुसञ्ज्ञावतो हकारोत्तरवर्तिनोऽकारस्योदात्तत्वं शेषनिघातेनावशिष्टानुदात्तत्वे सहस्रशब्दे आदिरनुदात्तो द्वितीय उदात्तस्तृतीयोऽनुदात्तः सन्नुदात्तात्परत्वात्स्वरितः। ततस्तस्मादिनिप्रत्यये प्रत्ययस्वरेण “आद्युदात्तश्चे”त्यनेनेनिप्रत्ययस्येकार उदात्त· शेषनिघातेन हकारोत्तरवर्त्तिनो ऽकारस्यानुदात्तत्वम्। ततोऽमः प्रत्ययस्य सुप्त्वादनुदात्तत्वम् इति सहस्रिणंशब्दे आदिस्वरद्वयमनुदात्त तृतीय उदात्तश्चतुर्थोऽनुदात्तोऽपि “उदात्तादनुदात्तस्य स्वरित' इत्यनेन स्वरित· पदपाठे। संहितायां तु पूर्ववर्त्तीन्द्र·शब्दावयवदाकारात्स्वरितात्पर इति सहस्रिणंशब्दस्यादिः प्रचितः “स्वरितात्परेषामनुदात्तानामि”त्यनेन। द्वितीयस्यापि तथैव स्वरितात्परत्वात्प्रचये प्राप्ते तदपवादेन “उदात्तस्वरितपरस्य सन्नतर” इत्यनेनोदात्तपरत्वादनुदात्तापरपर्यायः सन्नतरः। वस्तुतस्तु सन्ननिहतनिघातानुदात्तशब्दानां समानार्थत्वेन ततस्तरपि अनुदात्ततर इत्यर्थः सन्नतरशब्दस्य तथापि उदात्तोदात्ततरयोरनुदात्तानुदात्ततरयोर्लेखनं पृथक्चिन्हाभावेनोदात्तचिन्हेनैवोदात्ततरस्यानुदात्तचिन्हेनैवाऽनुदात्ततरस्य संप्रदर्शनादनुदात्तापरपर्यायशब्दबोध्यत्वं सन्नतरार्थस्येति विज्ञेयम्। यस्मिन्। “यज देवपूजासङ्गतिकरणमित्रकरणदानेषु इतिधातो“स्त्यजितनियजिभ्यो डिदि”त्यौणादिकेनादिप्रत्ययो डित् डित्त्वाट्टिलोपे यद् शब्द । तस्मात्सप्तम्येकवचने ङिप्रत्यये तस्य “ङसिङ्योः स्मात्स्मिनौ” इत्यनेन स्मिन्नादेशः। त्यदाद्यत्वपररूपे पूर्वमेव प्रवर्त्तेते। तत्र धातु स्वरोऽदिप्रत्ययस्वरेण बलीयसा निवर्तितः। अथ वात्र स्वरप्रवृत्तितः पूर्वमेव प्रत्ययगतडित्त्वनिमित्तेन टेर्लोपेन “सर्वविधिभ्यो लोपविधिर्बलवानिति”परिभाषणाद्धातोः स्वरस्य लोपादत्र प्रत्ययस्वर एव यच्छब्द इति तस्यान्तोदात्तत्वम्। अव्युत्पत्तिपक्षे तु प्रातिपदिकस्वरेणान्तोदात्तत्वम्। ङेप्रत्ययस्य सुप्त्वेनानुदात्ततया तत्स्थानिकस्मिन्नादेशस्याप्यनुदात्तता। त्यदाद्यत्वस्य व्यञ्जनस्था-

दशमीमृचमाह :—

मा नो मर्ता अभि द्रुहन्तनूनामिन्द्र गिर्वणः ॥
ईशानो यवया वधम् ॥ १० ॥

मा । नः । मर्ताः । अभि । द्रुहन् । तनूनाम् । इन्द्र । गिर्वणः ॥
ईशानः । यवय । वधम् ॥ १० ॥

हे गिर्वण इन्द्र मर्ताः = विरोधिनो मनुष्या नोऽस्मदीयानां तनूनाम् = शरीराणां माभिद्रुहन् = अभितो द्रोहं मा कुर्युः । ईशानः = समर्थस्त्वं वधम् = वैरिभिः संपाद्यमानं यवय = अस्मत्तः पृथक्कुरु ॥

निकत्वेनानुदात्तत्वम् । पररूपैकादेशस्योदात्तानुदात्तस्थानिकत्वेऽपि उदात्तस्थानिकत्वनिबन्धन "एकादेश उदात्तेनोदात्त"इत्युदात्त इति यस्मिञ्छब्दे आदिरुदात्तो द्वितीयोऽनुदात्तः सन्नुदात्तात्परः इतिस्वरितत्वं गतः पदपाठे संहितायां तु विश्वानिशब्दीयोदात्तः पर इति अनुदात्तापरपर्यायः सन्नतर उदात्तस्वरितपरस्य सन्नतर इति सूत्रेण । विश्वानि । विश प्रवेशने इत्यस्मात्तौदादिकाद्विशधातोः "विशेःक्वन्" इत्यौणादिकेन सूत्रेण क्वनि प्रत्यये विश्वशब्दः । तस्मात्प्रथमाबहुवचने जसि तस्य 'जश्शसोः शिः" इत्यनेन श्यादेशे "शि सर्वनामस्थानमि"त्यनेन तस्य सर्वनामस्थानसञ्ज्ञायां "नपुंसकस्य झलच" इत्यनेन प्रातिपदिकस्य नुमि "सर्वनामस्थाने चासम्बुद्धौ" इत्यनेनोपधाया दीर्घे विश्वानीति पदं भवति । तत्र धातोः स्वरः प्रत्ययसामान्यस्वरेण सोऽपि नित्स्वरेण निवर्त्यत इति विश्वशब्दआद्युदात्तः शेषनिघातेनान्त्यानुदात्तः । जसः सुप्त्वादनुदात्तत्वं श्यादेशस्य स्थानिवत्त्वादनुदात्तत्वम् । तन्निमित्तकोपधादीर्घोऽप्यनुदात्तस्थानिक इति स्थानिवत्त्वेनानुदात्त इति विश्वानिशब्दे आदिरुदात्तो द्वितीयोऽनुदात्तो ऽप्युदात्तात्पर इति स्वरितस्तृतीयः स्वरितात्पर इति प्रचितः पदपाठे । संहितायां तु पौंस्यानिशब्दावयव उदात्तः पर इति उदात्तस्वरितपरस्य सन्नतर इत्यनुदात्तः । पौंस्या । पूञ् पवने इतिधातोः पूञो डुमसुन्प्रत्यये पुंशब्दः । उणादौ तु पातेर्डुमसुन्नुक्तः । तस्मात्पुंशब्दात्कर्मार्थे "गुणवचनब्राह्मणादिभ्यः कर्मणिच" इति सूत्रेण ब्राह्मणादेराकृतिगणत्वात्ष्यञ् प्रत्ययः । "तद्धितेष्वचामादे"रित्यनेनादेरचो वृद्धावौकारे पौंस्येतिप्रातिपदिकम् । तस्मात्प्रथमाबहुवचने जसि तस्य जश्शसोःशिरिति श्यादेशे तस्य सर्वनामस्थानसञ्ज्ञा 'शि सर्वनामस्थानमि"त्यनेन । ततस्तस्मिन्परतो नपुंसकस्य प्रातिपदिकस्य नुम्विधायकेन "नपुंसकस्य झलच" इतिसूत्रेण नुमागमः । "सर्वनामस्थाने चासम्बुद्धावि"त्ययेन नान्तस्योपधाया दीर्घविधायकेनोपधादीर्घः । ततः "शेश्छन्दसिबहुलमि"त्यनेन शिप्रत्ययस्य लुकि "नलोपःप्रातिपदिकान्तस्ये"ति नलोपे पौंस्येति पदम् । "सर्वविधिभ्यो लुग्विधिर्बलवानि"ति पूर्वं लुकि छान्दसत्वादिना प्रत्ययलक्षणेन नुमादिकं बोध्यम् । प्रक्रियालाघवाय प्रथमाबहुवचनस्य सुपांसुलुगित्यादिना डादेश उक्तः । प्रत्ययस्य नित्त्वात्पुंशब्द आद्युदात्तः ञित्त्वात्पौंस्यशब्द आदिरुदात्तः, तस्योदात्तोकारस्थाने वृद्धौकारः स्थानिवत्त्वादुदात्तः । यकारःशेषनिघातेनानुदात्तः । तत्स्थानिकाकारोऽपि स्थानिवत्त्वेनानुदात्तः । तस्योदात्तात्परत्वात्स्वरित इति बोध्यम् ।

"मनुष्या" इत्यादिषु पंचविंशतिसंख्याकेषु मनुष्यनामसु "मर्ता व्राता" इति (निघ० २।३) पठितम्। मर्ताः। "असिहसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्" (उ० ३।८५) इति तन्। नित्त्वादाद्युदात्तः। अभि। "एवमादीनामन्तः" (फि० ४।१३)। द्रुहन्। "द्रुह जिघांसायाम्"। "लिङर्थे लेट्(३।४।७) इति प्रार्थनायां लेट्। तस्य झि। "झोऽन्तः" (पा० ७।१।३) "इतश्च लोपः परस्मैपदेषु" (पा० ३।४।७९) इत्याकारलोपः। शपो लुक्। "सार्वधातुकमपित्" (पा० १।२।४) इति तिङो ङित्त्वाल्लघूपधगुणाभावः। तनूनाम्। असामर्थ्यान्न पराङ्गवद्भावः। इन्द्र गिर्वणः। गतम्। ईशानः। धातोरनुदात्तेत्त्वाच्छपो लुकि लसार्वधातुकानुदात्तत्वे धातुस्वर एव शिष्यते। यवय। यौतेर्णिचि "संज्ञापूर्वको विधिरनित्य" इति वृद्धिर्न क्रियते। अथवा यौतीति यवः। पचाद्यच्। यवं करोतीत्यर्थे "तत्करोति तदाचष्टे" (पा० ३।१।२१।२५) इति णिच्। इष्ठवद्भावाट्टिलोपः। तस्य स्थानिवद्भावाद् वृद्ध्यभावः। वधम्। "हनश्च वधः" (पा० ३।२।७६) इति भावेऽप्। तत्संनियोगशिष्टः स्थानिवद्भावेनान्तोदात्तो वधादेशः। उदात्तनिवृत्तिस्वरेणाप उदात्तत्वम्* ॥ १० ॥ १० ॥ १ ॥ २ ॥ २ ॥

---

मानो मर्ताः

*मा। निपातत्वादाद्युदात्तो "निपाता आद्युदात्ता' इति फिट् सूत्रेण। नः। "अनुदात्तं सर्वमपादादावि"ति अधिकारस्थेन "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोरि"त्यनुवृत्तौ "बहुवचनस्य वस्नसावि"ति सूत्रेण षष्ठीबहुवचनान्तास्मच्छब्दस्य स्थानेऽनुदात्तनसादेशविधानादनुदात्तः। संहितायां तदीयसकारस्य "ससजुषोरुरि"तिरुत्वे मर्ताःशब्दीयोकारः पर इति रोः स्थाने हशि चेत्युत्वे पूर्वेण गुणादेश ओकारः। तत्र उकारस्य व्यञ्जनस्थानिकतया व्यञ्जनस्य च 'व्यञ्जनमनुदात्तम्" इत्यनेनानुदात्तत्वेन स्थानिवत्त्वेनानुदात्तत्वम्। ततस्तस्य पूर्वेण गुणादेशस्तु अनुदात्तद्वयस्थानिक इति स्थानिवत्त्वेनानुदात्त एवेति। मर्ताः। मृङ् प्राणत्यागे इति धातोः "असिहसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्नि"त्यौणादिकेन तनि प्रत्यये पूर्वस्य ऋकारस्य गुणे रपरत्वे मर्तशब्दः। तत्र धातोरित्यनेन मृधातोरन्त उदात्त प्राप्तः, तस्य सतिशिष्टत्वाद्बलीयसा प्रत्ययसामान्यस्वरेण "आद्युदात्तश्चे"त्यनेन बाधेन प्रत्ययस्यादेरुदात्तत्वे प्राप्ते तस्याप्यत्र प्रत्ययगतनित्त्वनिबन्धननेन ञ्नित्यादिर्नित्यमित्यनेन बाधान्निदन्तादिरूपो मर्तशब्दस्यादिस्वर उदात्तः। सच प्रवर्तमान ऋकारदशायां प्रवर्तते ततो गुणे तस्य ऋकारस्थानिकतया स्थानिवत्वेन गुणाकार उदात्तः। शेषनिघातेनान्त्यस्यानुदात्तत्वम्। ततः प्रथमाबहुवचने जसि प्रत्यये "प्रथमयोः पूर्वसवर्ण" इत्यनेन पूर्वेण सह पूर्वसवर्णदीर्घैकादेशे रुत्वविसर्गयोर्मर्ता इति पदम्। तत्र जसः प्रत्ययत्वेन प्रत्ययसामान्यनिबन्धन "आद्युदात्तश्चे"ति आदेरुदात्तः प्राप्तः परंतु तस्यापवादकेनानुदात्तौ सुप्पिताविल्यनेन अनुदात्तत्वविधानादनुदात्तो जसकारः। तस्य मर्तशब्दीयान्त्यानुदात्ताकारेण पूर्व-सवर्णदीर्घैकादेशे तस्योभयानुदात्तस्थानिकत्वेन स्थानिवत्त्वेनानुदात्तत्वम्। तस्योदात्तात्परत्वात्स्वरितः "उदात्तादनुदात्तस्य स्वरित"इत्यनेन। अभि। निपातत्वेनाद्युदात्तत्वे प्राप्ते उपसर्गसञ्ज्ञया "उपसर्गाश्चाभिवर्जमि"त्यनेनाभिरूपोपसर्गस्य तत्पर्युदासात् प्रादिपदिकत्वेन "एवमादीनामन्त" इत्यनेन वान्त उदात्तः। शेषनिघातेनादिरनुदात्तः।

## ॥ इति प्रथमस्य प्रथमे दशमो वर्गः ॥

## ॥ इति प्रथमाध्याये द्वितीयानुवाके द्वितीयं सूक्तम् ॥

द्रुहन्। द्रुह जिघांसायाम् इत्यादादिकाद्द्रुहधातोर्लिङर्थे लेट् तस्य प्रथमपुरुषबहुवचनविवक्षायां परस्मैपदे झिरूपे आदेशे तदवयवस्य झकारस्य "झोऽन्त" इत्यनेनान्तादेशे "इतश्च लोपः परस्मैपदेषु" इत्यनेन इकारलोपे द्रुह । अन्त् इत्यत्र शप् प्रत्ययस्तस्य "अदि प्रभृतिभ्यः शप" इति लुक् । सार्वधातुकमपिदित्यनेन पिद्भिन्नसार्वधातुकत्वादन्तीत्यस्य ङिद्वद्भावेन "क्ङिति च" ति धातूपधागुणनिषेधे "सयोगान्तस्य लोप" इत्यनेन द्रुहन्त्शब्दान्त्यतकारलोपे द्रुहन् इति पदम् । तत्र धातुस्वरं बाधित्वा प्रत्ययस्वरेणाद्युदात्तश्चेत्यनेन प्रत्ययादेरुदात्तत्वे द्रुहन् शब्दोऽन्तोदात्तः प्राप्तः परन्त्वत्रातिङन्तपदात्परत्वेन "तिङ्ङतिङ" इत्यनेन सर्वानुदात्तः। तस्य संहितायामभिशब्दीयोदात्तात्परत्वा "दुदात्तादनुदात्तस्य स्वरित इत्यनेन द्रुकारः स्वरितः। स्वरितात्परत्वाद्धन्शब्दावयवाकारः प्रचितः स्वरितात्परेषामनुदात्तानामित्यनेन। तनूनाम्। तनु विस्तारे इत्यस्माद्धातोः "भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उ" रित्यौणादिकेन सूत्रेण उप्रत्यये तनुशब्दः। ततष्षष्ठीबहुवचने आमि ह्रस्वनद्यापो नुडिति नुटि नामीति दीर्घे तनूनामिति पदम्। तत्र धातुस्वरं बाधित्वा प्रत्ययस्वरेण तनुशब्दोऽन्तोदात्तः। आमः सुप्त्वेनानुदात्तत्वं, दीर्घस्योदात्तोकारस्थानिकतया स्थानिवत्वादुदात्तत्वम्। आदिस्तु शेषनिघातेनानुदात्त इति तनूनांशब्दे आदिरनुदात्तो द्वितीय उदात्तस्तृतीयोऽनुदात्तोऽपि उदात्तात्परत्वात्स्वरितः। इन्द्र। इन्देर्ऋज्रेन्द्रेत्यनेन रन्प्रत्ययान्तत्वेन निपातनान्नित्त्वादाद्युदात्त इन्द्रशब्दस्तस्य संबोधनप्रथमैकवचनान्तस्येन्द्रेतिरूपम्। तस्यामन्त्रितसंज्ञावत्त्वेन पदात्परत्वेनापादादौ वर्तमानत्वेनाष्टमिकेन आमन्त्रितस्य चेति सर्वानुदात्तत्वम्। तत्र संहितायां तनूनांशब्दीयनामाकाररूपस्वरितात्परत्वादिन्द्रशब्दीयं स्वरद्वयमपि प्रचितम्। अत्र सुबामन्त्रिते पराङ्गवत्स्वरे इत्यनेन शवसोनपात इत्यादाविव तनूनामिति पदस्य पराङ्गवत्त्वेनामन्त्रितप्रवेशेनामन्त्रितस्येति सर्वानुदात्तत्वशङ्का न कार्या। यतः पराङ्गवद्भाव सुबन्ताद्युद्देश्यक इति पदोद्देश्यकत्वेन पदविधिः। पदविधेश्च सामर्थ्ययुतपदस्थले एव प्रवृत्तिरिति समर्थः पदविधिरित्यनेन बोधनात् प्रकृते तनूनामिन्द्रेति पदयोः सामर्थ्याभावात्। सामर्थ्यं चात्र व्यपेक्षारूपम् परस्परान्वयित्वलक्षणम्। तनूनांपदस्य द्रुहन्नित्यनेन सम्बन्धो नत्विन्द्रपदेन। इन्द्रपदस्यापि सम्बोधनपदस्योद्देश्यत्वेन क्रियायामन्वय इत्युक्तेः क्रियायामेवान्वयो नतु तनूनांपदेन इति परस्परान्वयलक्षणसामर्थ्याभावः। गिर्वणः। गॄनिगरणे इति धातोः क्विपि इत्वे रपरत्वे गीःशब्दः। वनु याचने इति धातोरन्तर्भावितण्यर्थात् वनपणसम्भक्ताविन्यस्माद्वा सर्वधातुभ्योऽसुनित्यसुनि प्रत्यये गिर्वनःशब्दयोः समासे सम्बोधनैकवचने रूपम्। दीर्घाभावः छान्दसः। तत्र गीःशब्दे धातुस्वरेणान्तोदात्तत्वमिति ऋकारस्थानिकेकारस्यास्थानिवत्वेनोदात्तत्वम्। वनःशब्देऽपि धातुस्वरं प्रत्ययसामान्यस्वरस्तं नित्स्वरो बाधते इति आद्युदात्तं पदम्। ततः गिर्शब्दस्य वनःशब्देन समासे समासस्येत्यन्तोदात्तत्व बाधित्वा कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तस्यापि "लघावन्ते द्वयोश्च बह्व षो गुरुरि" त्यनेन बाधादाद्युदात्तत्वे प्राप्ते तस्यापि आमन्त्रितत्वेन सर्वानुदात्तत्वविधानाद्बाधः प्रकृते। संहितायां तु स्वरितात्परत्वात्त्रयाणामप्यचां प्रचयः स्वरः। ईशानः। ईश ऐश्वर्ये इति धातोर्लटि तस्य शानजादेशे मध्ये शपि तस्य लुकि ईशान इति शब्दः प्रथमैकवचने रुत्वविसर्गयोः। तत्र धातुस्वरं बाधित्वा प्रत्ययसामान्यस्वरः प्राप्तस्तं बाधित्वा चित्स्वरः प्राप्तस्तस्यापि तास्यनुदात्तेदित्यादिनाऽनुदात्तेद्धातुतः परत्वाल्लसार्वधातु-

स्क०—मा नोऽस्माकं मनुष्या अभिद्रुहन् द्रोहं कार्षुः। तनूनां शरीराणां हे इन्द्र गिर्वणः स्तुतिभिः सम्भजनीय स्तुतीनां सम्भक्त। ईशानः प्रभुस्त्वं यवय। यौतिः पृथग्भावे। पृथक्कुरु अपनयास्मत्तः। बधं हिंसां हन्तारं वा ॥ १० ॥

इति प्रथमस्य प्रथमे दशमो वर्गः ॥ १० ॥

कानुदात्तत्वेन बाधे धातुस्वर एवावशिष्यत इति ईशानशब्द आद्युदात्तः। शेषनिघातेन द्वयोरनुदात्तत्वम् तत्रोदात्तात्परत्वाद्द्वितीयः स्वरितः स्वरितात्परत्वाच्च तृतीयस्य प्रचयः। तत्र संहितायामन्त्यस्य रुकारस्य रुत्वे उत्वे गुणे स्थानिवत्त्वेनानुदात्तत्वमिति तत्रापि पूर्ववदेव प्रचयः। यवय। यु मिश्रणामिश्रणयोरित्यादादिका-द्युधातोर्णिचि सञ्ज्ञापूर्वकोविधिरनित्य इति वृद्धेरभावे सार्वधातुकार्द्धधातुकयोरित्यनेन गुणेऽवादेशः। ततो लोटि मध्यमपुरुषस्यैकवचने सिपि तस्य सेर्ह्यपिच्चेति ह्यादेशे मध्ये शपि तन्निमित्तके णेर्गुणेऽयादेशे अतो हेरित्यनेन हेर्लुकि यवयेति पदम्। तत्र संहितायामन्त्यस्य सांहितिको दीर्घः। अत्र सार्वधातु-कार्द्धधातुकयोरिति गुणे कर्तव्ये छान्दसत्वात् अनित्यत्वाद्वा सञ्ज्ञापूर्वको विधिरनित्य इति न प्रवर्तते। अथवा युधातोः पचाद्यचि यवशब्दस्तस्माण्णिचि इष्ठवद्भावेन टेर्लोपे तस्य स्थानिवत्त्वेन वृध्द्यभावः। ततो लोडादि-प्रक्रिया पूर्ववद्। तत्र धातोः स्वरं णिच्प्रत्ययस्य प्रत्ययसामान्यस्वरो निवर्तयति तमपि णिच्प्रत्ययगत-चित्त्वनिबन्धन. चित इति स्वरो निवर्तयतीति णिजन्तस्योदात्तत्वम्। परवर्तिशपः पित्त्वादनुदात्तत्वमिति णिच्स्वर एवावशिष्यते ततो णिजिकारस्य गुणे तस्यावादेशे च उभयोरपि स्थानिवत्त्वेनोदात्तत्वमिति यवयशब्दे द्वितीय उदात्तः प्राप्तः प्रथमकल्पे। द्वितीये तु यवशब्दे धातुस्वरं बाधित्वा प्रत्ययस्वरः प्राप्तस्तं प्रत्ययगतचित्त्वनिबन्धनश्चित इति स्वरो बाधत इति यवशब्दे चित इत्यनेन चिदन्तस्योदात्तत्वमि-त्यन्तोदात्तत्वम्। ततो णिचि तत्स्वरः पूर्वोक्तप्रक्रिययेतिमध्योदात्तपदप्राप्तिः। परतु अत्रातिङन्तपदात्परत्वा-दपादादिस्थत्वात्तिङङतिङ इत्यनेन सर्वानुदात्तत्वम्। तत्र पूर्ववर्तिस्वरितात्परत्वात्प्रचयः संहितायां सर्वेषाम्। वधम्। हन हिंसागत्योरित्यादादिकाद्धातोर्हनश्चवध इत्यनेन अप् प्रत्ययस्तत्सन्नियोगेनान्तो-दात्तो वधादेशोधातोः। ततो वधशब्दस्तस्माद्द्वितीयैकवचनेऽमि अमिपूर्व इतिपूर्वरूपे वधमितिपदम्। तत्र धातुस्वरं बाधित्वा प्रत्ययस्वरः प्राप्तस्तस्य प्रत्ययगतपित्त्वनिमित्तकानुदात्तेन बाधनाद्धातुस्वरोऽ बाधित-स्तिष्ठति। तदा धातुस्थाने जातस्य बधादेशस्य स्थानिवद्भावेनान्तोदात्तत्वे प्राप्ते पुनर्वधादेशेऽन्तोदात्तत्वकरणा-द्देवदत्तहन्तृहतन्यायः स्वरविधौ नाश्रीयत इति ज्ञापनम्। असार्वत्रिकोऽयं ज्ञापनार्थं इति क्वचन प्रवर्तत-एव सः। एव च प्रकृते वधादेशस्यान्तोदात्तत्वम्। तस्याकारस्यापि प्रत्यये लोपेनाप्प्रत्ययाकारस्योदात्तत्व"मनु-दात्तस्य च यत्रोदात्तलोप' इत्यनेन। अमः प्रत्ययस्य सुप्त्वेनानुदात्तत्वम्। पूर्वरूपैकादेशस्योदात्तस्थानिकत्वे नोदात्तत्वमिति वधशब्दे आदिरनुदात्तो द्वितीय उदात्तः।

† आत्वेतेति सूक्तमन्त्रार्थः कारिकाभिरभिव्यञ्जित आनन्दतीर्थाचार्यै रित्थम्—

आत्वेता० १, पुरूतमम्—सुपूर्णानां पूर्णतमं वरेण्यानामधीश्वरम्।
सुते सोमे सुखेनैव सचा गायत तं प्रभुम् ॥२॥

सच मुक्तौ योगायासमन्ताद्भवेक्तोऽघोवऽधारणे।
स एव भगवाञ्ज्ञानवित्ताय सच बुद्धिगः ॥१॥

वे०—माभिद्रुहन्तु इन्द्रास्माकमङ्गेभ्यः शत्रवः। गीर्भिर्वननीय ईश्वरस्त्वं पृथक्कुरु शत्रूणामायुधमिति ॥ १० ॥

इति प्रथमस्य प्रथमे दशमो वर्गः ॥ १० ॥

बुद्धिः पुराश्रयत्वेन पुरन्धिः पत्न्यथापि वा ।
पत्न्यर्थत्वे तु तादर्थ्यं सोऽन्नैः सह न आव्रजेत् ॥३॥

यस्य संस्थे – यस्य स्थितौ न वृणते हर्यग्रमपि शत्रवः ।
मनः पुरो वा विषयहरणान्मन एव च ॥१॥

बुद्धिश्च हरिशब्दोक्ते तमआदीनि शत्रवः ॥४॥

सुतपाव्ने सोमपे शुचयः सोमाः प्राप्त्यै दधिविमिश्रिताः ।
मनांसि ध्यानयुक्तानि वा यान्ति हरये सदा ॥५॥

स्वसुतस्य—सदा पूर्णः शुभज्ञानज्यैष्ठ्यव्यक्त्यै सुतात्मये ॥
न क्षुदादेरभिव्यक्तो भवो ॥६॥

आत्वा - गीर्भिर्वृत प्रभो ।
प्रकृष्टचेतास्त्वद् भृत्यो योऽस्मै स्युः शंकराः सुताः ॥७॥

त्वांस्तोमाः—व्यञ्जयन्त्यधिकं स्तोमाः साम्न्युक्थान्यृक्षु चैव हि ।
महागुणैर्व्यञ्जयन्तु गिरोऽस्माकमपि प्रभो ॥१॥

आकाशवृद्धिवद्वृद्धिर्विष्णोः स्यान्नैव चान्यथा ।
न वर्द्धते नोकनीयानिति ह्येनं श्रुतिर्जगौ ॥२॥

महातात्पर्यरोधाच्च श्रुत्यर्थो नापरो भवेत् ।
यद्यन्यापेक्षया वृद्धिरीशत्वं स्यात् कुतोऽस्य च ॥३॥

अक्षितोतिरिति ह्यस्मात्पूर्णाभिप्रायतोदिता ॥८॥

अक्षितोतिः—अनन्तफलदं वाजमस्मत्तो लभतां सच ।
ददातुवा पौरुषाणि शक्तयो यत्र चाखिलाः ॥१॥

अतश्चानन्तशक्तित्वान्न वृध्याद्याः कथंचन ।
सर्वोपेतेत्येतमर्थमभिप्रत्याह देवराट् ॥९॥

मानो—मा मर्तानस्तनूनां तु द्रोग्धारः स्युः कथंचन ।
ईशोऽस्यपाकुरु वधं तेन नो मुक्तिदानतः ॥१॥

मानुषेभ्यस्तनूनां च नैव नः स्युर्विपत्तयः ।
कालेन दैवतः प्राप्तः स्याददेहत्वतो वधः ॥२॥ १० ॥ इति ॥

+m = ū + m = O (from change of ū to o by guna) + m (= om). Omāsaḥ is the Nom plural (same as voc. pl.) of oma by the augment of *asuk* (*as*), (Pān. VII. 1.50) Oma can be traced back to the Indogerm a*u*ĕi, promote; through av, oman and avestan av, aoman. (Persson, p 723)] It has been used in the sense of protecting or protector (S., Sk., Vkt., Lud, G, L., V., W, Grf), helper (R, Benfey), associate or companion (Gr. Dic.), united (figuratively) (Gr). Rgh. suggests the derivation, ā (wholly) + u (ūrikrta, obtained) + māḥ (pramāh, knowledge by whom) = omāh, learned The word omāsah does not occur elsewhere.

Carṣaṇīdhrta, voc. pl. of carsaṇīdhrt = carṣaṇi + dhṛt (upapada compound, i.e., a compound with the second member subordinate to the first. Pān II. 2 19), ni becoming ṇī [R P. VII 1 (433)].

Carsaṇī [krs, draw, plough + ani]. The word occurs in Nigh. II 3 as one of the III. 25 synonyms of 'man', in Nigh. 11, (Nir V. 24), the words vicarsani and viśvacarsani occur with six other words signifying 'seeing'. The word is used here in the sense of 'man' (in all the comm. and translations) and 'people' or 'common folk' (G). In G. (Glossar) it is rendered 'man', 'people', 'race', 'stock', 'tribe. According to Gr (Dic) the word, derived from car, to wander, indicates, 'living being' in general and is used for 'man' (mankind) in a restricted sense Used as as an adjective, it has the significance of 'hastening' and further of 'activity' (briskness). He gives the following meanings: (1) adj hastening, brisk, active; (2) pl living being (both men and gods included); (3) pl men, (4) with pañca, five tribes or stocks of men As Monier-Williams (Dic.) indicates, the word has the idea of 'cultivator' or 'cultivating people' (as opposed to nomads), this seems to be the better interpretation (See Pischel u Geldner, Ved. Stud, I. 128). The word has been thus used elsewhere

Being —L., VIII. 2.13, IX 1 9.—W, IX 101.9.

Living being.—Gr, V. 39 4, VI. 1 7; VII 27 3; etc.

Man, mankind, mortal —S (most of the ṛks).—L, IV 31 4, VI 18 1, VIII 64.4, etc.—Gr., III 10 1; VI 22.1, VI 30 5; etc.—Lud (nearly all the rks) —W., IV. 17 20, VIII. 96 20, X 180.3, etc.—Grf (most of the ṛks)

People, folk.—S. (prajā), III. 43.2, IV. 7 4, VI. 22 1, etc —G. (nearly all the rks, Mandalas 1-4).—Gr., III 43.2; X. 9.5 —Lud, I 7 9 —W, IV. 7.4 —Grf, X. 103.1; X 180 3.

Generation.—L, VI 1 8.—Gr, VII. 15 2.
Descendant (Fr enfant)—L, IV. 8 8; IV 19 35
Stock of men, tribe —S (Jana), VII 15 2 IX 101 9.
Gr, III. 6. 5; V 62 2, IX 101 9, etc.
Every body (Welt) —Gr, 1. 176 2.
Good.—Gr, 1. 7. 9.
Guiltless.—Gr, V. 83 2
Wise.—S., 1. 176 2; L 1. 176. 2.

Benevolent — L, VIII 9 17; VIII 23 9; VIII 96 20, etc
Innocent — W, V 82 2
Worshipper (Yajamat) — S, III 6 5
One who sees all — S, 1 86 6
Enemy — S, VI 46 6 — W, VIII 1 2
Soldier — S, VIII 68 4 — W, VIII 68 4

It may be noted that the word carsani, as derived from krs, 'plough', clearly indicates that in the Rgvedic times, the Aryans were agricultural people Gr's view does not appeal to us.

Dhrt (√dhr, to hold, to support, + kirp; with the variation dhrik) The verb dhr (dhriñ), according to Dhātupātha, means 'to hold' It is used in the sense of 'to hold, to support, to possess, etc'. The word dhrt signifies 'supporting, holding', etc

Carsanidhrt means 'defending, protecting or maintaining the people or mankind'

Viśve devāsah (voc pl of visva and deva) Yāska, in Nir, means 'all the gods' by viśve devāh and that they are 'rays of light' Viśva is adj to deva (Durgāchāryya) The two words together have been rendered as 'all gods' (Lud, G, Gr.), 'all gods' (Benfey, SK, VM) 'Universal Gods' (W) Grf leaves the name as it is L keeps Viśve as it is and renders devāsah as 'gods' (See below for Viśve devāh)

Viśva [√viś, pervade, + kvanip, Un I 151 Zend, viśpa Lit, visa-s Ksl (Church-Slavonic) visi Cf Indogerm, vika, Old Persian, viśa, Russian ves] The word viśva, according to G (Gloss) has been used in the RV in the following senses 1 (a) Adj, all, every (II 38 5 8, VII 18 4), every one (VIII 1 19), (b) adj entire, whole, complete (sarva) (I 73 5, III 31 5, V 34 7) 2 n, the universe, the whole world (I 25 20, 1 50 1 5, II 12 9, II 38 2, V 83 9, X 121 7) Gr (Dic) indicates 'every, all, entire, all things' (The word is also dealt with by J Zubaty, Indogerm Forsch 25, p 201, K Brugman, Die Ausdruecke fur den Begriff der Totalitat in den indogerm Sprachen, Liep, 1893-4, E W Fay I F, 32, p 330, and Cl Rev 11, 1897, p 143 None of these are available here)

Devāsah [Deva + asuk (as) (Pān VII 1 50) Deva div, sky, heaven, + an (Sabdakalp) It may also be derived from √div to shine Indogerm, deievo', deivo-s Lat diva, divinus Oscai, deivai, deivinais Umber, deveia Ancient Iranian, dia Old High Germ, Zio Old Islandic, Tyr Original Germ, tiva-z Lithuanian, devas deive Avestan daeva Old Prussian deiva-s, deiv-s Greek, Zeos, deos, theos Gallic, devivos (Fick, Brugmann) ] In Nir (7 15), "Deva (God) is (so called) from making gifts (√dā) or from being brilliant (√dip), or from being radiant (√dyut), or because his sphere is heaven He who is called God (deva) is also called deity (devatā)" (Sarup, Eng tr, p 121), the word deva (in Nom, pl) is again referred to in 12 38 Sāyana explains the word in I 1 1 According to G (Gloss), it means 'god', generally 'son of the heaven (IV 2 17), one honoured like god (VI 47 28; X 70 4 5), Gr (Dic) means 'heavenly', 'God' The original idea of deva seems to be 'one connected or belonging to the heaven' and secondarily it came to mean 'brilliant

one' and 'god' (Also discoursed by J Hertel, I—Ir Qu n F IX 1927 and by Th Noeldeke, Zeits, Ind—Iran, 2 p 318)

Āgatā (Ā + √gam + t of the second person, pl of lot (Imperative), the śap (a), usually added after the root in lot, is elided in Vedic metres (Pān VII 1 10), 'm' of √gam is also elided (Pān VI 4 30) The classical Sanskrit form is āgaccha

Ā [A preposition or verbal affix (gati) Zend, ā Old Pers ā Àolic oud Cf Zend, ana Gr, ana Got, an Lit, nu Church-Slav, na Indo-aryan, ā (Fick 1890)] It means 'to', 'towards'

Gam [Indogerm, guem Old High Germ, coman Old Inland, coma Ancient Iran, a-gan (he went) Gatha form, jantu Gr, baiūō Lat, venio Gothic, qiman English come (See Brugmann Vol I pp 350, 399, 618, Persson, pp 572-3)].

Dāsvāmsah [voc pl of dāśvas Dāśvas = √dāśr + kvasu According to Pān VII 2 107 the root should have been reduplicated and got the augment it but both are prevented (Pan VI 1 12) as Vedic irregularities, cf Indo-germ, dākvas from dāk pleasing obliging, ready to serve, Gr, deuchhs (Fick, 1870)] The verb root dāśr, according to Dhātupātha, means 'give' (dāne) The word dāśvas has been rendered 'distributer, liberal, offerer' in G (Gloss) and 'full of favour' in Gr (Dic) It has been used in the sense of 'giver' (Ved) 'bestower' (of riches, L, of rewards, W, of the results of ceremonies, Sāyana), 'benevolent' (Benfey, Sk, Vk, Rgh), 'benefactor', 'wellwisher', (Lud) 'protection' (Gr) 'helper' (Rosen) and 'pious' (frommen, G) Elsewhere it has been used in the following senses

(a) As applied to various deities

Donor, distributor (Germ Spender etc), bestower (Germ Schanken)—S, X 10 4,6 (bestower of riches)—L, 1 84 7 (distributor of riches)—G, 1 47 3, II 2 8, etc—Gr, 1 85 12, 1 163 13, III 62 4, etc—Lud, 1 182 2, III 11 7, many times—W, X 104 6 (donor of reward)

Protector (Germ Schutz)—L, I 91 9—Gr, I 150 1

Helper—Lud, VIII 57 4

Liberal (Germ Freigebig)—L, I 110 2, VIII 71 4; X 104 6, etc—S, I 74 8; IV 46 5 etc—W, 1 124 12, X 65 5, X 122 3.- Grf, 1 110 2, 1 124.12; etc

Noble—L, X 65 5,6.

Tender (of the people) (Germ Treiber)—G, 1 150 1

Partaker (drinker) of offering, —Gr, IV 15 3.

(b) As applied to men

Offerer, distributor of offering, Fr, serveteur—S, offerer of *havis* (most cases) —L, I 182 2, IV 46 5, etc—G, 1 182 2, IV 20 9, IV 46 5 (distributor of offering); etc—Gr, I 93 1, IV 30 20, VII 19 6 (bringer of offering), 1 84 7 and many others (distributor of offerings)—Lud, VIII 59 3—W, 1 47 3 (giver of offering), I 142 2, etc Grf, 1 47 3, VI 65 4 (who brings oblation), X 15 7, etc

Donor of homage—Gr, III 11 4; V 25 5, IX 3 6

One willing to offer (libation)—G, II 32 5, IV 11 3.

